पशुना यक्ष्यमाणो भवति। स उपकल्पयते पौतुद्रवान्परिधीन्गुल्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकां या पेत्वस्यान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपण्यौ विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं मुखेन संमितमिष्वावर्हिरिध्मं प्रणयनीयं सवशाखमिध्मसूनं यवान्यवमतीभ्यः सन्नमनहोमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा संवत्से वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सहोतारं सनमानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीꣳ स्रुवं बर्हिर्हिरण्यमुदपात्रꣳ हरन्ति तक्षाणꣳ सपरशुमाहेति[2] यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूप स्पृष्टो भवति यत्र वा नेत्स्यन्मन्यते। स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठतेऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्यथाग्रं बर्हिरनूक्ष्णयत्योषधे त्रायस्वैनमिति स्वधि-

---

१ Thus K. . . , गुग्गुल B: गग्गुल Be II, गुल्गुलु T: बग्गुलु F.

२ Thus only Be II: the other MSS om. चाय :

मध्यामित्येनमाहारयाहेति यजमानेनोत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धृत्यावोक्ष्य शम्यया चात्वालं परिमिमीते वित्तायनी मेऽसीति पुरस्तादुदीचीनकुम्बयान्तरतः स्फ्येनोल्लिखति तिक्तायनी मेऽसीति दक्षिणतः प्राचीनकुम्बयान्तरतः स्फ्येनोल्लिखत्यवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरतः स्फ्येनोल्लिखत्यवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरतः स्फ्येनोल्लिख्याथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति चात्वालोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति चात्वालोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति चात्वालोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति तूष्णीं चतुर्थं हरति सह बर्हिषाध्वर्युः स्फ्येन चात्वालात्पुरीषमुद्धरन्नथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति ततस्त्रिराग्नीध्रो हरति यदाग्नीध्रस्त्रिर्हरत्यथाध्वर्युरुत्तरवेद्यै पुरीषं संप्रयौति सिंहीरसि महिषीरसीति प्रथस्वोरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति स्फ्येन संहन्ति ध्रुवासीत्येनामद्भिरवोक्षति देवेभ्यः शुन्धस्वेति देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति तां प्रादेशमात्रीं

चतुरश्रां[1] निधाय शम्यया परिमिमीत उत्तरेणाभिमुखाधार्येणां प्रतिष्ठायामभिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति तया यूपावटं परिलिखति यथाक्तवेद्यर्धे स्यादर्धं वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदिमं यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमतिखनतादिति तꣳ स खनति वा खानयति वा यावदेवाध्वर्युर्वेद्धति तावदेव प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति[2] चात्वालाद्दात्वानेन्द्रघोषवतीः प्रोक्षणीरध्वर्युरादत्ते परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति अग्नावि संभारा भवन्त्यथ संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्यग्नीदेकस्फ्ययानुसंधेहीति त्रिरुक्तायामुद्यच्छन्ते होतुर्वेद्यं यज्ञुत्तरेण वेदिं प्रतिपद्यन्ते धारयन्त्येतमग्निमथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति ॥ २ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति पश्चाद्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतो ऽथ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणत उत्तरवेद्यै निनयति यदेव

१ Thus B T; चतुरश्रीं the other MSS.

२ Thus B Be T F; कल्पयति H.

यत्र क्रूरं तत्तेन शमयतीत्याज्यमथैनाꣳ हिरण्मयगर्भा-
चाग्निष्ठया पञ्चगृहीतेन व्याघारयति सिꣳहीरसि सपत्नसाही
स्वाहेति दक्षिणेऽꣳसे सिꣳहीरसि सुप्रजावनिः स्वाहेत्यु-
त्तरस्याꣳ श्रोण्याꣳ सिꣳहीरसि रायस्पोषवनिः स्वाहेति
दक्षिणस्याꣳ श्रोण्याꣳ सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरे ९
ऽꣳसे सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये
ऽथ भूतेभ्यस्त्वेति स्रुचमुद्गृह्णात्यथ पौतुद्रवान्परिधीन्परिदधाति
विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृꣳ-
हेति दक्षिणमच्युतक्षिदसि दिवं दृꣳहेत्युत्तरमथाग्निमिष्टाश्व-
भाराग्निवपति गुल्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्ने- १०
र्भस्मास्यग्नेः पुरीषमसीत्यथैनाꣳस्रुवेणाभिघारयत्यथ[2] प्रद-
क्षिणमावृत्येध्मं प्रतिष्ठापयति यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ
त्वा वसूनि पुरुधा विशन्तु। दीर्घमायुर्यजमानाय कृण्वन्नथा-
मृतेन जरितारमङ्ग्धीत्यथैनं विशस्याकूतिपाथं कृत्वाध्वराकूति-
भिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। ११
देवेभ्यः प्रब्रूताद्यज्ञं प्र प्र यज्ञपतिं तिर स्वाहा॥ वायुर्यज्ञं नयतु
प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञं प्र प्र यज्ञपतिं
तिर स्वाहा॥ सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्।
देवेभ्यः प्रब्रूताद्यज्ञं प्र प्र यज्ञपतिं तिर स्वाहा॥ यज्ञो यज्ञं

---

1 Thus F: गुल्गुलु B Be H; गुग्गुलु T (Grantha!).

2 °भिजुहोत्यथ Be F.

ञ्जाविशन्ति पूर्वं एवाध्वर्युरपरो यजमानो ऽपरा पत्न्येव मध्ये चषालं यूपस्याप्यनक्ति देवस्त्वा सविता मध्वानक्त्वित्यनारभ्य वाचयन् । स्वस्त्यं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पला ओषधीस्कधीभ्य इत्यथ स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्यांतमनक्त्यान्तमेव यजमानं तेजसानक्ति । नोपरमनक्ति । पश्वपरमनक्ति । सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति प्राञ्चमुच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेत्यथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्याꣳ । स यथाग्निष्ठामश्रिमाहवनीयेन संपादयति तद्वस्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यन्यूनमनतिरिक्तं परिव्ययोदपात्रमुपनिनीयाथैतां त्रिगुणाꣳ रशनां त्रिः संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । त्रिः प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यान्तं प्रवेष्टयत्यभिमति स्वधितमवयत्यथोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य त्वा सानाववगूहामीति । स्वर्वन्तं यूपमुत्सृजति । ॥ ४ ॥ प्रथमः ॥

अथैतं पशुं पल्पूलितमन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात्प्रत्यञ्चमुपस्थापयति । तमिषे त्वेति बर्हिषी आदायोपाकरोत्युपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वं प्रजापतेर्जायमाना[1] इमं पशुं पशुपते ते अद्येन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति । यद्देवत्यो वा भवति । प्रज्ञाते बर्हिषी निधायाधिमन्थनं शकलं[2] निदधात्यग्नेर्जनित्रमसीति । वृषणावन्वस्यौ वृषणौ स्थ इत्यथारणी आदत्त उर्वश्यस्यायुरसि पुरूरवा इत्यथैने आज्यस्थाल्यां समनक्ति घृतेनाक्ते वृषणं दधाथामित्यथ प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्रजायस्व त्रैष्टुभं छन्दोऽनु प्रजायस्व जागतं छन्दोऽनु प्रजायस्वेत्यथाहाग्नये मथ्यमानायानुब्रूहीति । जात आह जातायानुब्रूहीति । प्रहरन्नाह प्रह्रियमाणायानुब्रूहीति । प्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति । तयाक्ष्णया पशुमभिदधाति दक्षिणमर्धशीर्षमृतस्य त्वा देवहविः पाशेनारभ इति । विरुखायै च विमुखायै चाग्नौ संदधाति धर्षा मानुषानिति । निपुणमथैनमद्भिः प्रोक्षत्यद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति । यद्देवत्यो वा भवति । पाययत्यपां पेरुरसीति ।

---

१ These mantras are given sakalapāṭhena only in H Bo.

२ Thus BT Keś. अधिमन्थनशकलं H F Bo.

प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तं प्राङ्जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथाभ्यैति[1] शमितार उपेतनेति । पाशात्पशुं प्रमुच्यमानमनुमन्त्रयते ऽदितिः पाशं[2] प्रमुमोक्त्वेतमित्यथ विशाखयोपगृह्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्याथैनामादित्यमुदीक्षयति नमस्त आतानेत्यथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य[3] प्राचीमुदानयत्यथ वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरपो वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति । यानुपूर्व्यं[4] पशोः प्राणानाप्याययति । वाक्त आप्यायतामिति वाचं । प्राणस्त आप्यायतामिति प्राणं । चक्षुस्त आप्यायतामिति चक्षुः । श्रोत्रं त आप्यायतामिति श्रोत्रमेतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त एतेन शुन्धतामिति । नाभिस्त आप्यायतामिति नाभिं । पायुस्त आप्यायतामिति पायुꣳ संमृश्य पदः प्रक्षालयति शुद्धा-

---

१ Thus TH Be; अभ्येति BF.

२ T gives the first two pādas of this stanza (TS. III. 1. 4. 4), perhaps rightly.

३ Thus B Keś.; °निष्क्रमय्य Be TH; °निष्क्रम्ये F.

४ °पूर्वं THF Keś

बर्हिषा: समङ्क्ष्व: समोषधीभ्य: सं पृथिव्या इति । समरोम्णा-मित्यतिशिष्टा दक्षिणतो ऽनुपृष्ठं निनयति । नयन्ति पत्नीमुन्नेतारं पशुं पर्यस्यन्ति[1] । तस्य दक्षिणस्य पार्श्वस्य विशसनमनु प्राचीनाग्रं बर्हिर्निदधात्योषधे त्रायस्वैनमिति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति । छिनत्ति बर्हिर्वि लवं ह्यपस्पर्य-तस्यैव बर्हिषो ऽणिमत्स्यते । स्वविमदुभयतो लोहितेनाक्त्वा हिम निरस्यति रक्षसां भागो ऽसीदमहꣳ रक्षो ऽधमं तमो नयामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीत्यथाप उपस्पृश्य वरीय आच्छादयेथे लेति वपामुत्खि-दति । तया वपाश्रपणी प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्णु-वाथामित्यविशाखयोपतृणाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथैनां प्रदक्षिणमावृत्याङ्गिरभ्युक्ष्य[2] शामित्रे प्रतितपत्यथोल्मुक-प्रथमाः प्रतिपद्यन्ते ॥ ६ ॥

अन्वगध्वर्युर्वपयाच वपाश्रपणी पुनरन्वारभते यजमान । ऐत्युर्वन्तरिक्षमन्विहीत्यथाहवनीयस्यान्तमेष्वङ्गारेषु वपायै प्रति-तप्यमानायै बर्हिषो ऽग्रमुपास्यति वायो वीहि स्तोकानामि-त्यथैनामन्तरेण यूपं चाहवनीयं चोपातिहृत्य तां दक्षिणत उदङ्मुखः प्रतिप्रस्थाता श्रपयत्यथैनाꣳ स्रुवाहुत्याभिजुहोति त्वामु ते दधिरे हव्यवाहमित्यथाह स्तोकेभ्यो ऽनुब्रूहीति । परिश्रितासु स्तोकीयासु सृतायां वपायां शृतप्रशृतावादाया-

---

१ ०स्यन्ति Be F.

२ Thus all, except Be which has ०माहृत्य० : are we to correct प्रदक्षिणमावर्त्य ?

यन्नेऽथ संप्रैषमाहाग्नीदुन्नरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैष आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति । तदु-न्नरबर्हिर्भवत्यथ प्रतिप्रस्थाता पृषदाज्यं विहृत्य जुह्वाᳪं समानीयान्तरेण चात्वालोत्करावुदङुपनिष्क्रम्य पृच्छति शृतᳪं हवीः[1] शमितरिति । शमितैव उत्तरतो हृदयशूलं धारयᳪं-स्तिष्ठति । स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदय-मुपहत्य तᳪं शमित्रे संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृत-वत्स्वाहेति । विष्वः कृत्वा हरतेत्युक्तैतेनैव यथेतमेत्य प्लक्षशाखामुप-स्तृणीते जुह्वपभृतोरिडाधाने यस्मिᳪंश्च वसाहोमं यहीष्यन्भ-वत्याहरन्ति । तं पशुमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चापातिहृत्य तं[2] दक्षिणतः पश्वहोत्रामादधत्येतेनैव यूपाहरन्त्येतेनैवेडसूनमथ प्लक्षशाखायाᳪं हृदयं निधाय स्वधितिना तस्याग्रेऽवद्यन्नाह ॥ ८ ॥

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति । हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसोऽथ तनिम्नोऽथ वृक्कयो-रथ सव्यस्य दोष्णोऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरणुष्ठौ । नैवं · गुदं कृत्वापिमत्स्विष्टकृते निदधाति

१ With pluti sign only Be.

२ H om.; Bo sec. m. del.

स्वधितिमदुपयच्छन्तो मध्ये[1] द्वैधं कृत्वा जुह्वामवद्धात्यथ वृक्कमेदो यूषन्नवधाय तेन जुहूं प्रोर्णोति। यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति द्विष्टकृते सर्वेषां अङ्गानाᳲ सकृत्सकृत्समवद्यति। सकृद्दक्षिणस्य दोष्णः पिशितं प्रच्छिद्यावद्धाति सकृत्सक्थ्यै श्रोणेर्दक्षिणमर्धमुद्धृत्याथ वृक्कमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णोति। यूष्णोपसिञ्चति[2]। द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ[3] वनिष्ठुमितीडापात्र्याᳲ[4] समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ[5] कᳲसे वा चमसे वा वसाहोमं गृह्णाति। यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रो ऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सᳲसमेतु विषुरूपा यत्सलक्ष्माणो भवथ। देवत्रा यन्तमवसे सखायो ऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्भतः श्रोरस्याग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रᳲह्या अपामोषधीनाᳲ रोहिष्या इति। संमृष्टस्य पशोः प्रतीचीं जाघनीᳲ हरन्ति। प्रतिपरिहरन्ति पशुमथ जुहूपभृतावाददान आहेन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्यथाक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति। प्रतिप्रस्थातैष उत्तरतो

---

१ Thus Be H T Kes, मध्यं BF.

२ चाथ ins. Be FH.

३ Thus Be H F Kes. (sec. m.); मतस्न BT.

४ BH Be; इति पात्र्याᳲ; F इतिपात्र्याᳲ; T totally corrupt.

५ चाथ after ०सिञ्चति ins. Be F.

वसाहोमं धारयꣳस्तिष्ठति[१]। सो ऽर्धं वसायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति। वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपहत्याह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति। वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समावपमान आहाग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति। वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा होत्र इडामुपोद्धरन्ति सेदम्। उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धवमिष्टुमथार्धवमिष्टुं। सेदमत्राश्नन्ति। मार्जयन्ते। ऽथाह ब्रह्मणे वसाः परिहरेति। तद्ब्रह्मा प्रतिगृह्णाति ॥ ९ ॥

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तो अशीमहीत्यथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहर-न्त्येतानङ्गारानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युप-सीदत्युपयष्टा गुदकाण्डेनाध्वर्युः पृषदाज्यं विहत्य[२] जुह्वाꣳ

---

१ Thus B Bo; धारयं तिष्ठति H; the other MSS. corrupt.

२ Thus H T; विहृत्य B Bo; विपरत्य F.

समानीयाप्याय्याप्याय्याथ देवेभ्यः प्रेषेति । वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपयष्टोपयजति गुदस्य प्रच्छेदं समुद्रं गच्छ स्वाहेत्येतैरेकादशभिरग्निं वैश्वानरं गच्छ स्वाहेति सर्वेऽन्वन्तो ऽनुप्रहरत्यथ बर्हिषि हस्तौ निमार्ष्ट्यग्नीदौषधीभ्यो मनो मे हार्दि यच्छेत्यथास्य धूममन्वीक्षते तनूं त्वचं पुत्रं नप्तारमशीयेत्येकादशानूयाजाग्निहोत्रहवण्याक्रम्य जुह्वाः स्रुवमवधाय पुरस्तात्प्रत्यङ् तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति । ग्रंथुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विमुच्य जाघन्या पत्नीः संयाजयत्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तानायै जाघन्यै देवानां पत्नीर्यजति । नीच्यै[2] अग्निं[2] गृहपतिमुत्तानायै जाघन्यै होत इडामवद्यति । नीच्यै[2] अग्नीधे[2] षडवत्तं । प्राश्नीतो । मार्जयेते । अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं कृत्वा[2] न पत्नीकरणहोमेन चरत्यथ प्राकृत्य ध्रुवामाप्याय्य पौर्णि समिष्टयजूंषि[3] जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति । स्रुवेणैव द्वितीयमेष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहेति[4] । जुह्वा

---

१ जुह्वौ Be H.

२ Thus only Be; the other MSS. have नीचायै and नीचायै ।

३ जुहोति B Be.

४ T ins. पशुवच्चिकादि ।

तृतीयं देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचमेव याचति स्फ्यमुदपात्रꣳ हृदयशूलमित्येतत्समादायाहैहि यजमानेत्यध्वर्युर्यजमानो ऽनूचौ पश्चान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्याग्रेण यूपꣳ स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति ॥ १० ॥

शुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथाप्रतीचमायन्ति वरुणस्यान्तर्हित्यै प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथौपयजिके[1] ऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति । हस्तौ प्रध्वꣳसयते ऽघादेको ऽहुतादेकः समसनादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति द्वितीयं जुहोति यान्यपामित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्स्वाहेति

१ Corrected acc. to Bh.; ०वोपयजिके MSS.

इमौ प्रस्वꣳस्नयते ऽग्धादेको ऽहुतादेकः समसनादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति ' तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणाः स्याम । ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति ' इमौ प्रस्वꣳस्नयते ऽग्धादेको ऽहुतादेकः समसनादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमित्यथ देवता उपतिष्ठते ' ऽयं नो नभसा पुर इत्यग्निꣳ ' स त्वं नो नभसस्पत इति वायुं ' देव सꣳस्फानेत्यादित्यमथ यूपमुपतिष्ठत आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निꣳ स्वकर्णे समारोपयत्ययं ते योनिर्ऋत्विय इति ' तं मथ्यमे ऽग्नावपिसृजत्याजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्यामथ[1] मध्यममग्निमुपसमाधाय मध्यमे ऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति ' पूर्णाहुतौ वरं ददाति ' धेनुवरं[2] वानडुद्वरं[3] वा दद्यादिति ह स्माह बौधायनः ' संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः ॥ ११ ॥ तृतीयः ॥

॥ इति चतुर्थः प्रश्नः ॥

---

१ अथ om B.

२ Thus BF ; धेनू॰ H Be : धेनूं T.

३ Thus HTF ; वानडुंवरं B ; वानडुद्वरं Be ; comp. VII. 4 s f.

वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां । तस्य प्रयोग एकेन चातुर्मास्येन चातुर्मास्य-पथ्य पुष्यार्धे प्रयुञ्जीतेति । स उपकल्पयते वेदीꣳ मध्वीं लोहितायसं च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रः स्थालीश्चापवणित मेक्षणानि द्वयं पयः शृतदध्न्याय च[3] दधि हविरातञ्चनाय च त्रेधा बर्हिः संनद्धं तदेकधा पुनः संनद्धꣳ प्रसूमयं प्रस्तरमित्यथोपवसथीये [1]ऽहन्दिरविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुꣳ । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पुरस्तात् प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वाग्नीः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति । हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सौम्याय चरवे ऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपाला-

---

१ T F om.

२ J recommences with ं प्रसूमयं ।

३ चमि Bo J F H.

मार्जयित्वैतावपर्यावृत्य प्रदक्षिणमावृत्य प्रत्यङ्ङतिक्रम्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यधानीं । यजीषं संमार्जनेन च दर्भा योक्त्राणां च प्रोक्षणीरुत्पूय प्रथितं पृषदाज्यवन्त्या-न्यानि स्तीर्त्वा प्रोक्षणीभिरुपोत्तिष्ठन्नेवं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुर-स्तात्प्रस्तरमुखं प्रस्तरं गृह्णाति । त्रिविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राकभिस्तृण्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावा-दधाति । त्रिवृतौ तिरश्ची सादयति । विधृत्योः प्रस्तरमुखं प्रस्तरं । प्रस्तरे जुहूं । बर्हिष्युत्तरा । एता असदन्निति सम-भिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्व्यं[1] सर्वाँश्चुदास-यत्युपस्तीर्णाभिघारितान्पुरोडाशानभिघार्य यज्ञम्प्रमित्तमा मा हिंसीदिति कर्षे वा चमसे वाग्निं व्युद्धृत्य वाजिनमाग्नी-ध्राभिघारयत्यथैककपालमुद्दास्य यज्ञानीयानि:पृष्ठं करोत्यथै-तानि संपरिगृह्यान्तर्वेद्यासादयति भूर्भुवः सुवरित्येताभि-र्व्याहृतीभिरुत्करे वा विषये वा वाजिनमथ निर्मन्थ्यमाहृता निर्मन्थ्येन चरति[2] । प्रत्याभिक्रम्य । ॥ २ ॥

अथैनाम्सामिधमाददान आह्वाग्नये समिध्यमानायानुब्रू-हीत्याद्धातीमां । परि समिधं सिनक्ति । वेदेनोपवाजयत्यनू-क्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्या-मुत्तरमाघारं स्रुग्भ्यामुपायत्योदङ्ङत्याक्रम्य जुह्वा ध्रुवां समज्य

---

१ °पूर्वं Be H F.

२ चरति Be B; in the following khaṇḍa B has consequently प्रथमं ।

नीचात्याक्रम्यान्याथाय देवान्यजेति । वषट्कृते जुह्वतो ऽत्र यजेति यथानूयाजानिष्टोद्यावत्याक्रम्य यथायतनꣳ स्रुचः[1] सादयित्वा वाजवतीभ्याꣳ स्रुचौ[1] व्यूहतः । अंशुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विमुच्य । तथैव कꣳसौ वा चमसौ वानाव्यक्तिमौ धारयतः । समानौ वाजिनयोश्चर्याध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य प्राङेत्य ध्रुवा-माप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोत्येकं प्रतिप्रस्थाता दार्शपौर्णमासिकं दक्षिणे । ऽथ पूर्णपात्रविष्णुक्रमै-श्चरित्वा न विसृजते व्रतमथ यावत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं बर्हिः प्रतिवसनीये वाससी वाहरुक्ते निष्कासं तुषानित्येतत्स-मादायावैति यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण[2] चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यथापरस्ताद्यन्ति । प्रसिद्धो ऽवभृथः । साम चैव नाह देवीराप एष वो गर्भ इति चाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमही-त्येताहवनीये[4] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथ

---

१ Thus Be H; the dual both times in TFJ; B. has the first time the plural, the second time the dual.

२ Thus B Be HJ; स्रुचौ TF.

३ Thus passage चात्वेरि ... स्रुचौ पत्नी found thus only in B Be TH; J. has only चात्वेरि यजमानेति; F omits the words altogether.

४ Thus HF; ॰सेताहवनीये BJ.

विसृजतेऽतमंत्र पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षाणि च वर्तयते परि च वपते यद्भूमिः पर्यवर्तयदन्तरिक्षं पृथिव्या दिवः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तद्भूतं तत्सत्यं तद्भूतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्संतिष्ठन्ते वरुणप्रघासहवीꣳषि' परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते' ॥ ९ ॥ द्वितीयः ॥

अथातश्चतुर्षु मासेषु साकमेधहविर्भिर्यक्ष्यमाणो भवति' स उपकल्पयते वेणीꣳ शलली लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चतस्राणौस्तावन्ति मेक्षणानि पृषदाज्याय दध्यैव पौर्णमास्या उपवसथेऽग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता भवन्त्यथ सायꣳ हुतेऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्निवोद्धरति' सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयानवैयावादयत्यथाग्नये सोमायेत्याज्यभागाभ्यां

गार्हपत्यं परिस्तृणाति । तमुत्तरेणैकस्मिन्कर्षूं खनति चाग्नि-पूर्वार्धे ब्राह्मणाभ्यक्ते द्वाभ्यां स्वसृदक्षुणी यज्ञायुधानीत्यंच यज्ञोपवीतं कृत्वोत्तरेण[१] गार्हपत्यमुपविश्य पवित्रवत्याग्निहोत्र-*हवण्या निर्वपति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां* पूष्णो हस्ताभ्यां सोमाय पितृमते जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वा पितृभ्यो बर्हिषद्भ्यो जुष्टं निर्वपामीति चतुरो यवानामेतामेव प्रतिपदं कृत्वा पितृभ्यो ऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति चतुर एव यवानां । तेषां व्रीहीनेव हविष्कृतमुद्वादयत्युपोषच्छन्ते यवानहविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपदधात्यथैतान्यवानुलूखले परिखुद्य गार्हपत्य एक-कपालमधिश्रित्य भर्जयन्ति[२] । सुरूपा धानाः कृत्वा तेषामर्धा धाना भवन्त्यथेतरान्सक्तून्कुर्वन्ति । कृतानि पिष्टानि समुप्य संयुत्याधिश्रयन्ति[३] पुरोडाशं षट्कपालमथोत्तरतो भस्ममिश्रा-नङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमा-नीय तिरः पवित्रं धाना आवपत्यथैनदभिशान्त्यर्थं दुग्धमर्धपात्रं आचति । तस्मिंस्तिरः पवित्रं सक्तूनोप्यैकयेक्षुशलाकयोप-मन्थति । दक्षिणोपमन्थत्यनारभ्योपमन्थतीति ब्राह्मणमथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयति । स्वयं पुरोडाशस्य

---

१ जघनेन instead of उत्तरेण T.

२ om. Bo JF.

३ Before अधिश्रयन्ति H Be JF have अथ ।

पाययित्वाभिवान्यावैवायेभ्यो[1] निनयति। दक्षिणत एव सम चाखिलः कृतो भवति। तदेनां चतुरश्रां[2] वेदिमाक्रियत्येव न खनति। तस्यै मध्यतोऽन्वाहार्यपचनमुपसमाधाय स्तम्बयजुर्हरति। ॥ ११ ॥

इदमेव प्रभिन्नं पौरोडाशिकं। त्रिवृंगुणा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपत्युद्धन्त्युद्धतादाग्नीध्रमित्रिर्हरति। यदाग्नीध्रविर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रेष्यमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्याहृतासु प्रोक्षणीषूदश्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रभिन्नं पञ्चगृहीतानि वा चतुर्गृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्समूलं प्रस्तरं गृह्णाति तूष्णीमथ प्राचीनावीतं कृत्वा त्रिरपसलैः परिस्तृणात्पर्येति। संतरामेवाथे। ऽथ वितरामथ वितरामथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपर्येत्यथ[3] प्रस्तरपाणिर्द्वौ परिधी परिदधाति मध्यमं चैव दक्षिणं चोर्ध्वे समिधावादधाति। विधृतौ तिरश्ची सादयति। विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं।

---

१ After पाययित्वा Bo TJH have अपयित्वा।

२ Thus T; ॰श्रां the other MSS.

३ प्रति om. BF.

प्रस्तरे जुहूं। बर्हिषीतरे। एता असदन्निति स्रुचमभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहुत्यानुपूर्वꣳ[1] हवीꣳष्युद्वासयत्युपस्तीर्णाभिघारितं पुरोडाशमभिघार्य[2] धानाः करम्भमिति। तेषामेकैकमनूचीनान्युदाहरन्ति। दक्षिणतः पुरोडाशमासादयत्युत्तरतो धानाः। उत्तरतः करम्भं। दक्षिणत एतत्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दर्भाꣳ स्तम्बमिति निदधात्युत्तरत उदकुम्भौ। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतो ऽध्वर्युश्चाग्नीध्रश्च। ॥ १२ ॥

अथेध्मात्समिधमाददान आहाग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मꣳ सकृद्वा त्रिर्वा। परि समिधꣳ शिनष्टि। वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति। संमृष्टे स्रुग्भ्यामुत्तरमंसावꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य[3] जुह्वा ध्रुवाꣳ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते।[4] ऽध्याश्रावयत्यो श्रावयास्तु श्रौषडग्निर्देवो होता देवान्पितॄन्यक्षत्सीदेत्येतावान्प्रवरः। सीदति होता। प्रसवमाकाङ्क्षति। प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति। वषट्कृते जुहोति। यज यजेत्यपबर्हिषश्चतुरः प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावे-

---

१ ॰पूर्व्यꣳ all.

२ After पुरोडाशं B Bc HF ins. उद्वासयति।

३ Thus Bc HF; स्रुच उद॰ J; स्रुचावुद॰ T; स्रुचा उद॰ B.

४ BH ins. प्रसिद्धꣳ होतारं वृणीते but comp. TB. I. 6. 9. 1.

णानुपूर्वं[1] हवींष्यभिघारयत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवींष्युत्तरतः पुरोडाशमासादयति । दक्षिणतः करम्भमांग्रथ[2] एव धाना भवन्त्युत्तरत उपविशतो ब्रह्मा च यजमानश्च दक्षिणतो ऽध्वर्युश्चाग्नीध्रश्चाथैनत्परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । स यो बलवाꣳस्समाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन्परीहीति । स तथा करोति । निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १३ ॥

सोमाय पितृमते ऽनु स्वधेति । पूर्वार्धात्पुरोडाशस्यावद्यति । पूर्वार्धाद्धानानां । पूर्वार्धात्करम्भस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों[3] स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा[4] । स्वधा नम इति वषट्करोति । वषट्कृते

---

१ ॰पूर्वं all.

२ Thus FJ (?); चाग्रथा HBT; यथा Bo.

३ Here and in the corresponding passages some of the MSS. have चत्याश्रावयति instead of चति॰ and चा instead of चो।

४ Thus here and in the four corresponding passages BT; JF Bo have every time ये स्वधामह इत्यागूर्भवति instead of ये स्वधेत्यागूर्य स्वधामह इति वा; H has this passage four times thus: ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति ये स्वधेत्यागूर्य स्वधामह इति वा।

जुहोत्यथोपस्तीर्य मध्याद्धानानामवद्यन्नाह पितृभ्यो बर्हिषद्भ्यो ऽनु स्वधेति । मध्याद्धानानामवद्यति । मध्यात्करम्भस्य । मध्यात्पुरोडाशस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄन् बर्हिषदः स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्यापरार्धात्करम्भस्यावद्यन्नाह पितृभ्यो ऽग्निष्वात्तेभ्यो ऽनु स्वधेत्यपरार्धात्करम्भस्यावद्यत्यपरार्धात्पुरोडाशस्यापरार्धाद्धानानामभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄनग्निष्वात्तान्स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणार्धात्पुरोडाशस्यावद्यन्नाहाग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति । दक्षिणार्धात्पुरोडाशस्यावद्यति । दक्षिणार्धाद्धानानां । दक्षिणार्धात्करम्भस्य । द्विरभिघारयति । न प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयत्यग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते दक्षिणार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणꣳ शलाकामित्यग्नावनुप्रहरत्यथैने सꣳस्रावेणाभिजुहोत्यथ दक्षिणतो ऽत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवीꣳषि । दक्षिणतः

पुरोडाशमासादयत्युत्तरतः करम्भमांश्च[1] एव धाना भवन्ति[2]। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतोऽध्वर्युराग्नीध्रश्चाथ प्राशित्रमवदायेडामवद्यति। ॥ १४ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं। निरोप्य[3] भक्षयित्वा बर्हिषि संन्यस्यन्त्यथ प्राचीनावीतानि[4] कृत्वा पुरोडाशं धानाः करम्भमिति पात्र्याꣳ संप्रयौति। तिसृषु स्रक्तिषु[5] [6]पर्वसेवेषु त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्विति दक्षिणस्याꣳ श्रोण्यामेतत्ते पितामहासौ ये च त्वामन्विति दक्षिणेऽꣳस। एतत्ते प्रपितामहासौ ये च त्वामन्वित्युत्तरेऽꣳस। उत्तरस्याꣳ श्रोण्यां लेपं निमार्ष्ट्येषा युष्माकमियमस्माक-मिमां वयं जीवा जीवन्तोऽनुसंचरन्तो भूयास्मेत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य[4] यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि। प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाꣳ अनु। योजा न्विन्द्र ते हरीमित्यातमितोरुपतिष्ठन्ते। ऽथ गार्हपत्यमुपतिष्ठन्तेऽव-

---

१ Thus only F; यथा Be; चामय! the other MSS.

२ BT ins. उत्तरत उदकुंभो।

३ Thus (comp. Apastamba's चवनीय) T Bh. Koś., the other MSS. also Prayoga I.O. निरोप्य।

४ Here and in the following passages the MSS. have sometimes the singular instead of the plural: यज्ञोपवीतं, प्राचीनावीतं।

५ स्रक्तीषु Be H.

६ *Be JF ins.* च।

अमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा न-
विष्ठया मती । योजा न्विन्द्र ते हरी इत्याम् तमितोऽपतिष्ठन्ते
ऽथ प्राचीनावीतानि कृत्वाग्वाहार्यपचनमभिप्रपद्यन्ते ऽग्नन्पितरो
ऽमीमदन्त पितरो ऽतीतृपन्त पितरो ऽमीमृजन्त पितरः ।
परेत पितरः सोम्या इत्याम् तमितोऽपतिष्ठन्ते स यो बलवाꣳ- ५
स्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन्
परीहीति स तथा करोति निधाय कुम्भं यथेतं त्रिः पुनः
प्रतिपर्येत्याहरणप्रीत्येव[1] कशिपूपबर्हणे आञ्जनाभ्यञ्जने दद्यात्यथ
वासाꣳसि दद्यात्यथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते ऽथ वीरं
याचते ऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो १०
न्वाहुवामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथै-
तान्पिण्डान्सह पर्णसेवैरग्नावनुप्रहरति व्यवच्छिन्दन्ति परि-
श्रयणमथ यज्ञोपवीतानि कुर्वते ऽथ[2] संप्रैषमाह ब्रह्मन्प्रस्था-
स्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथ जुह्वपभृता-
वादायात्याक्रम्याश्राव्याह देवौ यजेति[3] वषट्कृते जुहोति ११
यज[4] यजेत्यपबर्हिषौ द्वावनूयाजाविष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ
स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति शंयुना प्रस्तर-
परिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्याथैव समिष्टयजुर्जुहो-

---

१ Thus B Be HF. Keś.; याचरणप्रीत्येव T; J corrupt.

२ Thus Be JF; ०वीतं कृत्वाथ the other MSS.

३ यजयजेति Be H.

४ om. Be F.

त्यथैतेषाꣳ शस्त्राणां द्वे द्वे उदाहरन्त्यथ यज्ञोपवीतानि कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठन्ते प्रजापते न त्वदेतान्यन्य इत्यथैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति ' संतिष्ठते महापितृयज्ञः ' ॥ १५ ॥ चतुर्थः ॥

यावदेवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता प्रतिपूरुषं त्रैयम्बकानेककपालानेकातिरिक्तान्गार्हपत्ये श्रपयित्वाऽभिघारितानुद्वास्य घटे वा शरावे वा जरत्कोशबिले वा समुप्योपास्ते 'ऽथ याचति नीललोहिते सूत्रे अन्तमं[1] पर्णमन्तमागाराद्दैकोल्मुकमुद्पाचमित्येतत्समादाय गार्हपत्यमुपतिष्ठन्ते यावन्तो गृह्याः स्युस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छेत्यथोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य नित्यसंपन्नस्तुष्पथः स्पष्टो भवति ' यद्यु वै न भवत्यनसा वा रथेन वा वियान्ति ' तदेतदेकोल्मुकमुपसमाधाय[2] संपरिस्तीर्यान्तमे पर्णे सर्वेषां त्रैयम्बकाणाꣳ सकृत्सकृत्समवदाय जुहोत्येक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति सुगं मेषाय मेष्यै अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् । यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्त्वाहेत्यथैतदन्तमं पर्णं यं द्वेष्टि तस्य

1 Here and infra the MSS. have sometimes अन्तिम॰ ।

2 एतद् only FJ ; the other MSS. om.

संचरे पशूनां न्यस्यति । पशवो वै न हैनं व्यावयटे[1] न्यस्त्वैवैतेषां त्र्यम्बकाणामेकैकं व्युत्सयच्छति द्वौ यजमानायैतमग्निं त्रिः प्रदक्षिणं परियन्ति[2] दक्षिणानूरूनुपाघ्नानास्त्र्यम्बकं[3] यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति । सकृत्परीत्योत्तरतस्तिष्ठन्त्युत्खिदन्ति[4] । भगाय त्वेति क्षिपन्त । एवमेव द्वितीयं परियन्त्येवं तृतीयमथैषा पतिकामा[5] निरपसलैः पर्येति सव्यमूरुमुपाघ्नाना[6] त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति । सकृत्परीत्योत्तरतस्तिष्ठत्युत्खिदति[4] । भगाय त्वेति क्षिपत । एवमेव द्वितीयं पर्येत्येवं तृतीयमथैनान्यजमानस्याञ्जलावावपति ॥ १६ ॥

प्रजया त्वा सꣳसृजामि मासरेण सुरामिवेति । तान्यजमानः पत्न्यञ्जलावावपति प्रजया त्वा पशुभिः सꣳसृजामि मासरेण सुरामिवेति । तान्पत्नी दुहित्रे भगकामायै भगेन

---

१ Thus Bh.; व्याध्यवटे T; व्याववटे B; the other MSS. व्यावयटे, comp. X. 48.

२ Thus only Be; the other MSS. write पर्यंति।

३ Thus BH; उपघ्नाना॰ J Be; उपघ्नानां F; उपनिघ्नानाः T; अपघ्नाना: Keś.

४ Thus BH; उत्क्षिरंति (as TBr. I. 6. 10. 5) the other MSS., but comp. Dvaidhasūtra: त्र्यम्बकानामुत्खेदन इति।

५ Instead of अथैषा पतिकामा BF have अथ दुहिता भगकामा।

६ Thus BH; उपघ्नाना Be JF Keś.

त्वा सꣳसृजामि मात्सरेण सुरामिवेत्यथैनान्मूत आधाय नीललोहिताभ्याꣳ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विषाणायां[1] वा बध्नात्येष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासा इत्यथाभितोऽवतिष्ठन्तेऽथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्यादित्यं चरुं पुनरेत्य निर्वपतीयं वा अदितिरस्यामेव प्रतितिष्ठन्तीति ब्राह्मणꣳ सा प्रसिद्धेष्टिः संतिष्ठतेऽथ विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य चेष्ट्या शलल्या लोहितायसेन च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते य इमां महीं पृथिवीमृतुभिः पर्यवर्तयन्तो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तद्धुतं तत्सत्यं तद्धुतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्संतिष्ठन्ते साकमेधहवीꣳषीदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते ॥ १७ ॥ पञ्चमः ॥

अथातश्चातुर्मास्येषु शुनासीरीयहविर्भिर्यक्ष्यमाणो[2] भवति

---

१ Thus Be HF, *Dvaidha*, Bh., Koś.; विषाणायां BT.

२ Some MSS. read here and *infra* शुनासीर्य°।

स उपकल्पयते वेदीं मख्यौ लोहितायसं च क्षुरं चतुष्क-पालानि पुरोडाशकपालानि पञ्च चरुस्थालीरासादयन्ति नेक्षणानि पृषदाज्याय दधीत्यथैताः[1] रात्रिं वायवे वत्सा अपाकृता भवन्ति । प्रातर्वायव्यं पयो दोहयति[2] सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पृषदाज्यं स्तीर्णापः प्रणीय निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति । त्वचं पुरोडाशानां ग्राहयित्वा अपयित्वाभिवास्य प्राकृत्याग्नेयेभ्यो निनीय सान्नयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । निर्वपणा तूष्णीं चतुर्थं । पूर्वं परियाहं परिस्तृणाति । करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रश्चाहरति । स यद्युत्तरवेदिं करोति यथा महाहवीष्येवं संतिष्ठते । यदु वा उत्तरवेदिं न करोति यथा वैश्वदेवहवीष्येवं संतिष्ठते ऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य येष्ठा प्रतक्ष्णा लोहितायसस्य च क्षुरेण शीर्षणि च वर्तयते परि च वपत एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः ॥ प्रजामनु प्रजायसे तदु ते मर्त्यामृतम् । येन मासा अर्धमासा ऋतवः परिवत्सराः ॥ येन ते ते प्रजापते

---

१ इति found only in BH; the word is missing in all the MSS. also supra page 141, 15.

२ दोहयित्वा TF.

ईशानस्य प्रवर्तयन्। तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे॥ अग्निश्विनेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ ग्रीष्मंस्तद्वृतं तत्सत्यं तद्वृतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुर-स्ताद्वाये ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टाद्व-तिष्ठन्ते ध्रुवासौरीयवतीँ संवत्सरीणाँ स्वस्तिमाशास्त इत्या-शास्ते॥ १८॥ षष्ठः॥

॥ इति पञ्चमः प्रश्नः॥

अग्निष्टोमेन यक्ष्यमाणो भवति । स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां च सैषा मुञ्जी वेणीकार्या भवति त्रिवृदेकतःपाशा द्वाविꣳशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूलां च शरेषीकामौदुम्बरं च[1] दण्डं चमसं च[2] व्रतप्रदानꣳ स्थालीꣳ मथिक्याꣳ समेषणामेतानि त्रयोदश यजमानस्तावन्त्येव पत्नीमभितो भवन्ति कुम्भं च कुरीरं च वासश्च योक्त्रं चापरिमितानि च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूला च शरेषीकामृन्मयश्च पात्रः शङ्कुश्च स्थाली मथिक्या समेषणा । जुष्टे देवयजने शाला कारिता भवति । पुरोहविषि देवयजने याजयेदित्येतेषां यच्चोषयते । प्राचीनवꣳशा दिक्षतीकाशा दक्षिणतो वर्षीयसी । तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीं । दक्षिणतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालमथ[3] यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं पत्न्यै । तयोः प्राचौ द्वारौ कुर्वन्ति । तदुदकुम्भौ निधापयत्यथामावास्येन वा हविषेष्ट्वा मथन्ते वारण्योरग्नीन्समारोह्य शालामभिप्रैत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य मध्यमे वꣳशे राजानं प्रबध्नन्ति । परिस्तृणन्ति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ

१ च only P, the other MSS. om. the word, except F which has चमसं ।

२ च om HF.

३ Thus TJ; ०स्थालाम० HBP; ०स्थालीम० F.

गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाकूतिं जुहोति यद्यच्च जुहोति। पूर्वाह्ण एवैतौ व्रतदुघयोर्वत्सौ बध्नन्त्यथाभ्यां व्रतोपायनीयं पाययति[1]। तस्याग्नितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्याथाध्वर्युस्तीर्थ्याग्निसंभारान्याचत्यथा हैहि यजमानेति। पूर्वया द्वारोपनिष्क्रम्य यथापस्तद्धन्त्यथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्ति ॥ १ ॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इत्यूर्ध्वाग्रं बर्हिरनुक्ष्यत्योषधे त्रायस्वैनमिति। स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति। प्रवपति देवश्रूरेतानि प्रवप इति। स्वस्त्युत्तराण्यशीयेत्युप्तान्तं प्रत्यभिमृशत। एतयैवावृतोत्तरं गोदानमद्भिरुनत्ति यजुषा वा तूष्णीं वा। नापिताय क्षुरं प्रयच्छन्नाह नापितोऽस्यग्रमस्तु मे निकृत्तनखं प्रमृतादिति। तं तथा प्राह्यथैनमद्भिरभिषिञ्चत्यापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतप्वः पुनन्त्विति। संप्रधाव्य रज. प्रस्नावयति विश्वमस्मत्प्रवहन्तु रिप्रमित्युदेत्युदाभ्यः[2] शुचिरा पूत एमीति। वसनस्यान्तेन प्रतिच्छाद्याप आचामत्यपो ऽश्नातीति ब्राह्मणमथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहीत्यथास्यैतदवनीतं विषितमुदशराव उपप्रेते। तस्य पाणिभ्याꣳ संप्राप्य

---

१ Thus J; पाचति T; वाचयति BP; पाययति H; वाचयति F.

२ Corrected according to Bh., Ke., and the parallel passage p. 159. 1. The Mss. have not उदेमि but देमि (BT) and दति HF; J om.

मुखमेव प्रथममभ्यङ्क्ते महीनां पयो ऽसि वर्चोदा असि वर्चो मयि धेहीत्यनुलोममा पादाभ्यामन्यो ऽस्य पृष्ठमभ्यनक्त्यथास्मै तदाञ्जनं पिष्टं तूषमुपप्रेते सतूला च शरेषीका। तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहीति निरभिधावं। द्विरन्तरमेषु पञ्च कृत्व आङ्क्त इति ब्राह्मणं। पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमथैनमेकविंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति। यजमानमतिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्यथैनं सव्ये पाणावभिपद्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति। पूर्वया द्वारा शालां प्रपाद्य-तीन्द्राग्नी द्यावापृथिवी आप ओषधीरित्यथैनमग्रेणाहवनीयं पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीतीह मा सन्तं पाहीत्यात्मानम्। ॥ २ ॥

यावदेवाथाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता पत्न्यै दक्षिणमुपपक्षमद्भिरुनत्ति तूष्णीं। तूष्णीमूर्ध्वाग्रं बर्हिरनूक्षयति। तूष्णीं क्षुभितिं तिर्यञ्चं निदधाति। तूष्णीं प्रवपति। तूष्णीं-मुखान्तं प्रत्यभिमृशत। एतयैवावृतोत्तरमुपपक्षमद्भिरुनत्ति तूष्णीमेव। नापिताय क्षुरं प्रयच्छन्नाह नापितोऽस्योपपक्षौ मे निकृन्तन्त्वां प्रभूतादिति। तां तथा प्राचीथेनामद्भिरभिषिञ्चति

तूष्णीं । तूष्णीꣳ संप्रधाव्य रजः प्रक्षालयति तूष्णीमद्भिरवदेति[1] तूष्णीं । वसनस्यान्तेन प्रतिच्छाद्याप आचामति । तूष्णीं[2] प्रदक्षिणमहतं वासः परिधत्ते । तूष्णीमभ्यङ्क्ते । तूष्णीमाङ्क्ते । ऽथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति तूष्णीं तूष्णीमेवाथैनामानीयापरया द्वारा शालां प्रपाद्य प्राचीमुदानयन्वाचयति प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमित्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति । तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीꣳ संनह्यति न यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं पाचति[3] न पत्नीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान्क्रमते । ऽथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यानीयाज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति ॥ ३ ॥

आकूत्यै प्रयुजे ऽग्नये स्वाहा मेधायै मनसे ऽग्नये स्वाहा दीक्षायै तपसे ऽग्नये स्वाहा सरस्वत्यै पूष्णे ऽग्नये स्वाहेत्यथ

---

१ वक्षिर् ( Instr.) all, instead of the Abl., that was to be expected; H omits the word.

२ तूष्णीं twice BF.

३ Thus HTJF; पाचयति B.

स्रुचि चतुर्गृहीतं गृहीत्वा स्रुवा पञ्चमीं जुहोत्यापो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाभ्यस्य पूर्णाꣳ स्रुचमौद्गृभणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथाग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां चौदुम्बरं दण्डं पञ्चममुष्णीषꣳ षष्ठमथ प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वासश्च योक्त्रं च शङ्कुं च ॥ ४ ॥ प्रथमः ॥

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तस्य शुक्लकृष्णे संमृशति शुक्ले ऽङ्गुष्ठो भवति कृष्णे ऽङ्गुलिर्ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृच इत्यथ दक्षिणं जान्वाच्याभिसर्पतीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेत्यथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति पाहि मा मा मा हिꣳसीरिति निष्कां ग्रन्थिं ग्रथ्नात्यैतस्मिन्काले प्रतिप्रस्थाता योक्त्रेण पत्नीꣳ संनह्यत्याशासाना सौमनसꣳ सं त्वा नह्यामीति द्वाभ्यामथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति वसनस्यातीकाशेषु वाचयति नक्षत्राणां मातीकाशात्पाहीति प्रतिकृष्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेण शिरो वेष्टयति शिया

ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसायेत्येतस्मिन्काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमध्यूहति तूष्णीमथास्यैषा कृष्णविषाणा त्रिवलिर्वा पञ्चवलिर्वा प्राच्या रज्ज्वा परिहृत्या मण्डपरवद्विपयिता[1] तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसीति मा मा हिꣳसीरिति यजमानः प्रतिगृह्णाति तां वसनस्यान्तमायां[2] दशायां बद्ध्वा तयान्तर्वेदि लोष्टमुद्धन्ति कृष्यै त्वा सुसस्याया इति सुपिप्पलाभ्यस्त्वौषधीभ्य इति दक्षिणं गोदानं कण्डूयत एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै शङ्कुमावबध्नात्येतेन कण्डूयस्वेत्यथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरित्यूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णात्यथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इत्यत्र मुष्टी[3] करोति वाचं[3] यच्छत्यथाहादीक्षिष्टायं ब्राह्मणो ऽसावित्यंगोत्रो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता नमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः

---

१ The reading of these difficult words is not wholly certain ; H reads as above ; B : मंडपरवविवाविप॰ , J : मंडपरववाविप॰ ; T : मण्डलपर-वद्धाविप॰ ; F : मडपरविताबाविप॰ ; P : मंडपरवविताबाविप॰ ; comp. the Bhāṣya (and Keś.) मण्डपरवत् लाङ्गलपाशवत् बद्धा, where बद्धा is the periphrase of विपयिता ।

२ वंतिमायां BJ .

३ Thus (without च) TJF ; BH ins. च after वाचं and after मुष्टी, but comp. TS. VI. 1. 4. 3.

इत्यंधाम्ने कंसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति । तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति । यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयत्ये-तस्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति । तत्सा परिश्रित्य व्रतयति तूष्णीं । निर्णिज्य पात्रे प्रयच्छतो । ऽथ तथैव पुरा नक्षत्राणामन्तर्धानात्संप्रेष्य वाचंयमयोर्व्रते दोहयतो । ऽथोदित आदित्ये यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते । समानो वाचो विसर्गः समानꣳ संवेशनयजुः समानं प्रबुद्धयजुः समानमपामाचमनꣳ समानं व्रतमथ मनौहारान्प्रहिणोति । स यं मन्यते न मा प्रत्याख्यास्यतीति तं प्रथममभि प्रहिणोति विश्वे देवा अभि मामाववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावेत्याहरन्तं दृष्ट्वा जपति नानाहरन्तꣳ रास्वेयत्सोमा भूयो भर मा पृणन्पूर्त्या विराधि माहमायुषेति । स यथारूपं प्रतिगृह्णाति ॥ ७ ॥

चन्द्रमसीति हिरण्यं वस्त्रमसीति वास । उस्रासीति गाꣳ । हयो ऽसीत्यश्वं । छागो ऽसीति छागं । मेषो ऽसीति मेषमथ यद्ब्राह्मणेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भवेत्येव तत्प्रतिगृह्णाति । ताः समुदायुत्य[1] रक्षन्ति । तासां या नश्यति वा म्रियते

[1] Thus BTJ; समुदाचित्य H; समुदावेत्य F.

वा वायवे त्वेति तामनुदिशति। याप्सु वा पाशे वा वरुणाय त्वेति तां। या सं वा शीर्यते गर्तं वा पतति निर्ऋत्यै त्वेति तां। यामश्विर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति तां। तासां तिस्रः पराच्यो ऽथ येयं नष्टा यदि विन्देयुः कथꣳ स्यादित्येतदनुदिष्टैव[१] स्यादित्येतदेकं। कमस्या[२] अतः[२] श्रेयाꣳसं[२] प्रतिग्रहीतारं लभेत। दक्षिणाभिरेवैनाꣳ[३] सह दद्यादित्येकं। वायव्ययैवैनया[४] यजेतेत्येतदपरम्[४]। ॥ ८ ॥ द्वितीयः ॥

अथातः प्रयाणस्यैव मीमाꣳसा। दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते मꣳसृजन्ति व्रते। संवध्नन्ति व्रतदुघयोर्वत्सावादधति[५] यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयमपि वारण्योरग्नीन्समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्यथ यद्येनं यान्तं व्रतवेलोपाधिगच्छत्युत्तरतो ऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति। तूष्णीं तृणोदकायावस्यत्यथ यद्यपर्याणा[६] अप उपाधिगच्छति तज्जपति देवीरापो अपां

१ Thus BF (J om. this passage); अनुद्दिष्टैव T; अनुद्दिष्टैव H.

२ Thus T; कमस्यात्रे॰ BJ; अमस्यातः त्रे॰ F; कमास्याः त्रे॰ H.

३ एव om. BTF.

४ Thus JF (but यथायजेवे॰) H (but ॰वैनयजे॰); B: वायव्ययैवैनय-जयेत्ये॰; T: वायव्यंयैवेनयायजतेत्ये॰।

५ Thus only T an. Bh.; ॰दधाति the other MSS.

६ Thus all the MSS. and Keś., also the citation in the Dvaidha-sûtra. I did not venture to correct अपर्याणा, as only the Vivaraṇa reads

त्यथ चतुर एवाज्यस्य गृह्णान, आह सोमायेत्युपांश्वनुब्रूही-त्युच्चैरित्याक्रम्याश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते ऽपरार्धे जुहोत्यथ चतुर एवाज्यस्य गृह्णान आह सवित्र इत्युपांश्वनुब्रूहीत्युच्चैरित्याक्रम्याश्राव्याह सवितारमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धे जुहोत्यथोपस्तीर्य पूर्वार्धाच्चरो-रवद्यन्नाहादित्या इत्युपांश्वनुब्रूहीत्युच्चैः पूर्वार्धादवदाया-परार्धादवद्यत्यभिघारयति प्रत्यनक्त्यत्याक्रम्याश्राव्याहादितिमि-त्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ वै भवत्यदितिमिडा-मारुतीमृचमन्वाह मरुतो यद्ध वो दिव इत्यथोपस्तीर्योत्तरा-र्धाच्चरोरवद्यन्नाहाग्नये स्विष्टकृते ऽनुब्रूहीत्यथ वै भवत्यष्टावत्तः स्विष्टकृद्द्वादशावत्तेडा द्विरभिघारयति न प्रत्यनक्त्यथैतन्मेक्षण-मधोऽधः स्रुचावाग्नीध्रायोपयच्छन्नाहातिवालयतादेव मानु-प्रहार्षीरित्यत्याक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणमाहवनीये ऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यत्युपहूतायामिडाया-मग्नीध आदधाति षडवत्तं प्राश्नन्ति मार्जयन्ते ॥ ११ ॥

अथ परिकर्मिणः संप्राश्यनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राशीतायैतां चरुस्थालीं सचामकाषामेतन्मेक्षणमेतं वेदमेतद्बर्हिःस्तुष्यमुदयनीयाय निधत्तादिति संयन्तः[1] प्राय-

१ Thus B; संख्यन्तः T (Grantha!); संयुवंतः J; संयुतः H: संदुवता (प्रायणीया) F.

णीयः संतिष्ठते। ऽथैतत्पूर्वपाद्मन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भनाड्यां प्रबध्य स्रुच्यवदधातीयं ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छेत्यथैतां दर्भनाडीꣳ स्रुग्दण्ड उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्नी म्रासौ पङ्गुरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवꣳ हविरित्यथैनꣳ हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चितेत्यथैताꣳ सोमक्रयणीमग्रेण शालामुदीचीमतिविक्षयन्ति। तामनुमन्त्रयते चिदसि मनासीत्यान्तादनुवाकस्याथास्य दक्षिणस्येमस्य[१] सप्तमं पदं जोषयध्वमिति। तस्यै षट्पदान्यनुनिष्क्रामति ॥ १२ ॥

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति। सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेत्वित्यथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेत्यपोद्धृत्य हिरण्यꣳ स्फ्येन वा कृष्णविषाणया वा

---

१ Thus BJH; दक्षिणेमस्य T; F corrupt.

पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथैनत्स्फ्येनोपसंवापं पात्रस्मृतं पङ्कुरत्याꣳ संवपत्यस्मे रायो ऽस्मे राय इति त्विषे राय इति यजमानाय प्रयच्छति तोते राय इति यजमानः पत्न्या अथ पत्नीꣳ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेत्यथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीत्यथ यजमानः सोमक्रयणीमीक्षते माहꣳ रायस्पोषेण वियोषमित्यथैनदद्भिरभ्युक्ष्य:¹ प्रचाल्य मध्यमायामङ्गुलौ बध्नीते ऽथैनं² पदाग्रयमद्भिरपछ्जत्युत्सृजन्ति³ सोमक्रयणीं नयन्ति पत्नीं नि पद दधति ॥ १३ ॥ तृतीयः ॥

अथाचैन निष्क्रयाचति अन्ड्रं च छागां च कृष्णवलक्ष्यावूर्णास्तुकें⁴ उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमित्यथ पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३⁵ इति क्रय्य इतीतरः

१ Thus ( with एनद् ) all, also Keś.

२ Thus all, also, a copy of the Nivaraṇa ; Keś. : अथैनं ।

३ FH : उपछ्ज्य (or ज)तिजयंति सोम° ; B : उपछ्ज्यत्युत्सृजंति सोम° ; T. उपछ्जत्युत्सृजन्ती सोम° ; J : उपछ्ज्यति सोम° ; P : उपछ्जत्युत्सृजति ; Keś. has: अथैनं पदाग्रयं... उपछ्जति । सोमक्रयणीमुत्सृजंति The Somaprayoga I. O. 1262 has : पद्दैवे अपो निर्नीयतिजयंति ( thus ! ) सोमक्रयणीं । Are we to read : अतिनयन्ति instead of उत्सृजन्ति ?

४ FT °वलक्ष्या ऊर्णा°, the other MSS. also P, °क्ष्यावू° comp. the note on page 166.

५ The pluti sign is added in one of the MSS.-only ( H ).

प्रत्याह । सुविचितᳪं[1] राजानं पुरस्तात्प्राञ्चमभिपर्यस्यन्नाह यत्ते
गायत्रो भाग इति मे सोमाय ब्रूतादिच ते त्रैष्टुभो भाग इति
मे सोमाय ब्रूतादिच ते जागतो भाग इति मे सोमाय
ब्रूताच्छन्दोमानाᳪं साम्राज्यं गच्छेति मे सोमाय ब्रूतादि-
९ त्यथैतद्रोहितं चर्मानडुहमुत्तरलोमास्तीर्याधेतद्धिरण्यं[2] वासः
प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणात्यथ हिरण्यवता पाणिना
राजानमभिमृशत्यᳪंशुना ते अᳪंशुः पृच्यतां परुषा परुर्गन्धस्ते
काममवतु मदाय रसो अच्युतो ऽमात्यो ऽसि शुक्रस्ते ग्रह
इत्यथैनमतिष्कन्दयन्नर्चा मिमीते । एकयैकयोत्सर्गं मिमीते ।
१० ऽयातयाम्निययातयाम्नियैवैनं मिमीते । सर्वास्वङ्गुष्ठमुपनिगृह्णा-
त्यभि त्यं देवᳪं सवितारमूण्योः कविक्रतुमर्चामि सत्यसवᳪं
रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवी-
मनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति । पञ्चकृत्वो
यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानो[3] ऽर्धेवाᳪं राज्ञो
११ मिमीते । ऽथातिशिष्टᳪं राजानं प्रजाभ्यस्त्वेत्युपसमूहति । समु-
च्चित्य वसः स्वान्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति ।
व्यानाय त्वेत्यनुश्लन्थयत्यथोपरिष्टादङ्गुष्ठावकाशं कृत्वा यजमान-
मवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्वित्यथैनं
चर्मणि निदधाति । तं ततः कौत्स आदत्ते । ऽद्भिरभ्युक्ष्य

---

१ Thus HFP (comp. Padârthanirv. p. 270, No. 56); the other MSS. सवि० ।

२ The clause अथैतद्रोहितं ... वासः om. PJTH. Keś. cites them.

३ मिमानो JT.

यदीदं प्रत्यचोपोत्थाय पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[1] इति । क्रय्य इतीतरः प्रत्याह । मूजवता३[1] इति । मूजवतो हीतीतरः प्रत्याहाथैनं गवा पणते गवा ते क्रीणानीति । क्रीतः सोम इत्याह सोमविक्रयी वयाꣳसि व्याचक्ष्वेत्येषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं त इत्यथैनꣳ हिरण्येन पणते ॥ १४ ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन संयते[2] गोरित्युक्त्वास्मै चन्द्राणीति यजमानाय प्रयच्छत्यथैनं प्रतीचीनग्रीवयाजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यस्मे ते बन्धुरिति यजमानमीक्षते । मयि ते रायः श्रयन्तामित्यात्मानमथैनां प्रदक्षिणमावर्त्याङ्गिरस्त्वोदीचीमुत्सृजति[3] । सैषा कौत्सस्य भवत्यथ कौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति । तं यजमानस्योरौ दक्षिण आसादयतीन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमित्यथैनं प्रत्यपोर्णुते यजमानो ऽङ्गिरस्त्वा कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छत्यथ यजमानꣳ शुक्लयोर्णास्तुकयाध्यस्यत्यस्मै ज्योतिरित्यथैतां कृष्णामुपग्रथ्नातीदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीति । तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इत्यथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते

[1] Here again only H and Keś. have the pluti sign.

[2] Some MSS. have संमृते, the Mantramālā [illegible]।

[3] Most of the MSS. have वायस instead of वायवे।

यः सोमक्रयण्यास्तावच्चां मा वो दभन्नित्यथैनमादायोपोत्तिष्ठत्युदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अन्विति। दक्षिणत एतत्सोमवाहनमनः प्राग्रीषं सोमग्रहणमुपस्थितं भवति। तदभिप्रैत्युर्वन्तरिक्षमन्विहीति। तस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठते ऽस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानीत्यथैनं वाससा परितनोति वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्राविति। अथोदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यथ सोमवाहनावानीयमानौ प्रतिमन्त्रयत उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनाविति। तयोर्दक्षिणं पूर्वं युनक्ति वरुणस्य स्कम्भनमसीति। वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति। प्रत्यस्तो वरुणस्य पाश इति योक्त्रमेतयैवावृतोत्तरमनड्वाहं युनक्त्यथ दक्षिणामीषामन्वारभ्य संप्रेषमाह ॥ १५ ॥

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु त्वमाह्वा[1]यजमान आह्वास्यतीति। यदा यजमानस्त्रिरुपांश्वाह्वयते ऽथैव सुब्रह्मण्यो ऽन्तरेणेषे तिष्ठन्पलाशशाखां धारयन्सुब्रह्मण्यामाह्वयति सुब्रह्मण्योꣳ सुब्रह्मण्योमिति त्रिर्विवक्तायां प्रच्यावयन्ति प्रच्यवस्व भुवस्पते विश्वान्यभि

---

१ Thus F only; the other MSS. °आह्वैव° Read °ह्वो यज° (?)।

धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुराद्घच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतमिति। प्रदक्षिणः राजानं परिवहन्त्यथैतानश्वसोपसंक्रामतो ऽध्वर्युश्च यजमानश्च यजमानस्य स्वस्त्ययन्यसि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वित्यथाग्रेण शालां तिष्ठन्तोह्यमानः राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतः सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शःसतेत्यथैतत्सोमवाहनमनो ऽग्रेण शाला-सुदगीषमुपस्थापयन्ति[१] तदुपस्तभ्नोति वरुणस्य स्कम्भनम-सीति। वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्वृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रमथ वै भवति विमुक्तो ऽन्यो ऽनड्वान्भवत्य-विमुक्तो ऽन्यो ऽथातिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभत इति ब्राह्मणमथाहैहि यजमानेति। पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याः स्तीर्त्वाप: प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा ॥ १६ ॥

अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपा-मीत्येतामेव प्रतिपदं कृत्वातिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाग्नये त्वा रायस्पोषदाम्ने विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा

१ Thus J, Keś., Padārthanirv.; the other MSS. °यन्ति।

सोमपते विष्णवे त्वा जुष्टं निर्वपामीति। पञ्चकृत्वो यजुषा। हविष्कृता वाचं विसृजेतेत्यथैवाहुतोत्तरमनस्वाद्दं विसृजत्यथैते ब्राह्मणाश्चत्वार आसन्दीमाददते। ऽथ यजमानो नौडाद्राजानमादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति। पूर्व एवासन्द्या प्रतिपद्यन्ते। ऽन्वपाश्रया यजमानो ऽन्वक्छद्र[1] उदपात्रेण। पूर्वया द्वारा शालां प्रपादयति गयस्फानः प्रतरणः सुवीरो ऽवीरहा प्रचरा सोम दुर्यानित्यथैनामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधति[2]। तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठते वरुणो ऽसि धृतव्रतो वारुणमसीति। समुच्छित्य कृष्णाजिनस्यान्तानन्यया विग्रथ्य वरूथे प्रयच्छाति शंयोर्देवानाम्‌ सख्यादित्यथापरावासन्द्यौ पादावन्तरेण ब्राह्मणो ऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपश्छित्स्महीत्यथैनं वारुण्यर्चा परिचरति तत्त्वा यामि ब्रह्मणा वन्दमान इत्यथैनम्‌ संशास्ति मा राजानं चाहवनीयं चान्तरेण कश्चन संचारीन्मैनम्‌ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्त्राद्यो ऽनुप्रपादीदित्यथास्मै मधुपर्कं च गां च प्राहुस्तामध्वर्युर्विशास्ति। ॥ १७ ॥ चतुर्थः ॥

अपयन्त्येतमातिथ्यं वैष्णवं नवकपालं। तेन सह मदन्तीरधिश्रयति। श्रिपवदेतदाबर्हिरातिथ्यस्य भवति। कार्ष्मर्यमयीः

---

१ छूद्र F; छुद्र H; छ्रद्र PBJ; छूद T (Grantha!)

२ Thus only P, comp. Keśava (शालाया दक्ष निदधति); निदधाति the other MSS.

परिधिभिराश्ववालेन प्रस्तरेणैषीकीभ्यां विधृतीभ्यां तेन स्रुव-वत्सं पुरोडाशस्य श्रपयित्वा अपयित्वाभिवास्य[1] प्राक्त्यागेभ्यो निनीय सान्नाय्यमुद्धरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपत्युद्धन्युद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्यायतास्तु प्रोक्षणीपूर्वस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य स्रुवं च स्रुचश्च संमार्ष्याज्येनोदेत्याज्यं[2] च प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति। पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य काष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैषीकी विधृती तिरश्ची सादयति। विधृत्योराश्ववालं प्रस्तरं। प्रस्तरे जुहूं। बर्हिष्यितरे। एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्याथैतं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य च तूष्णीमातिथ्यमासादयत्यथ संभारान्व्याचष्टे। ऽथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति। प्रहृत्याभिक्रुत्याथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं। न समिधं परिशिनष्टि। वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु

---

१ अपयित्वा om. HTB; read by PJF.
२ उदेत्याज्यं BJ; उदेत्याज्यं the other MSS. also P.

जुह्वैकमाघारमाघारयति । संवहे स्रुचावुत्तरंसमाहवनीयस्यानु-पाङुदङ्ङत्याक्रम्य जुह्वा ध्रुवाꣳ समज्य वाचयिता जुह्वौ प्रवरं प्रवृणीते । अधिवृꣳ होतारं वृणीते । सीदति होता । प्रसवमा-काङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति । चतुर्थं चतुर्थमेतदौपभृतमानयꣳ सर्वत्र एव जुह्वाꣳ समानयते । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य अꣳस्रावेण ध्रुवामभिघार्य पुरोडाशमभिघारयति सोपभृतमथाग्नये सोमायेत्याज्यभागाभ्यां चरत्युपाꣳशु हविषा चरति विष्णवे ऽनुब्रूहि[१] विष्णुं यजेत्यथ स्विष्टकृता चरतीडान्त आतिथ्यः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य कꣳसं वा चमसं वा आनयति । तमन्तर्वेदि निधाय तस्मिन्ने-तत्तानूनप्त्रं गृह्णाति ॥ १८ ॥

आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णा-मीति । स यावन्त ऋत्विजस्त एतत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमिति । यजमानमति-वाचयत्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धा इति । स यावन्त ऋत्विजस्तेऽप-स्वमिद्धा यजमान एव चिरवजिघति प्रजापतौ त्वा मनसि जुहोमीत्यथैनदद्भिरभ्युक्ष्योत्तरतः शिक्यपाशमध्यवदन्त्यापा३[२] इति । मदन्ति देवीरमृता ऋतावृध इति । ताभिराप्लावयत्यथ

---

१ THF ins. इति ।

२ only H has the pluti sign.

मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति यजमानमतिवाचयत्याप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्याम-शीयेत्यथाप उपस्पृश्य यथायतनमनुपविशन्त्यथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति विधृतीभ्यां प्रस्तरꣳ समुत्सुप्याप्रतिष्टृण्वꣳस्त्रेधानक्ति न प्रस्तरायाश्रावयति न बर्हिरनुप्रहरति तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणौ निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावत्स्याचꣳ स्पन्द्यया विपन्थ्याहवनीये ऽतिवाह्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳशास्ति संतरां मेखलाꣳ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं[1] व्रतमꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो ऽधि व्रतयेति स एवमेवैतत्सर्वं करोति ॥ १९ ॥

अथ प्रवर्ग्यश्चावृता प्रवर्ग्येण चरत्यथ स्फ्यमाददान आहाग्नीन्मदन्तीरधिश्रय हविरधिश्रयैनमुपसीदेत्येतास्वेव मदन्तीषु भूयसीरप आनयत्याज्यमधिश्रयति तद्धविरथैतस्यैव

१ Thus Keś., Mantramālā ; पूर्वंव्रतं the other MSS. also P.

बर्हिष स्तीर्णस्य पर्यवलोपऽ ऽग्नयजुर्हरतीदमेव प्रविद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिवाहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिवाहं परिगृह्य योयुपित्वा तिर्यञ्चऽ स्फ्यऽ स्तब्ध्वा संप्रैषमाह पत्नीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि हविषोदेहीत्याहृतासु पत्नीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचौ च संमार्ष्टि । हविषोदेति । हविश्च पत्नीश्चोत्पूयाष्टौ कृत्वो जुह्वां गृह्णीते । चतुरुपभृत्याज्यस्थाल्यां तृतीयामुत्प्रदाय पत्नीभिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णात्येकविधं बर्हिं स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैवषौ विधृती तिरश्ची सादयति । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिष्यितरे । एते असदतामिति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे । ऽथैतेनैव यथेतमेत्याथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मऽ सकृदा त्रिर्वा । न समिधं परिशिनष्टि । वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे न स्रुग्भ्यामुत्तरमथ प्रवरं प्रवृणीते । ऽथाश्रावयत्यो श्रावयास्तु श्रौषट् सीद होतरित्येतावाग्प्रवरः । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावाददान आह ॥ २० ॥

अग्नय इत्युपाꣳश्वनुब्रूहीत्युक्त्वाश्राव्याग्निमित्यु-
पाꣳशु यजेत्युक्त्वा वषट्कृते पूर्वार्धे ऽर्धवेलां[1] जुहोत्यथास्यैतत्तिष्ठन्
सोमायेत्युपाꣳश्वनुब्रूहीत्युक्त्वाश्राव्य सोममित्युपाꣳशु यजे-
त्युक्त्वा वषट्कृते मध्ये जुहोत्यथ समानयमान[2] आह विष्णव
इत्युपाꣳश्वनुब्रूहीत्युक्त्वाश्राव्य विष्णुमित्युपाꣳशु यजेत्यु-
क्त्वा वषट्कृते पश्चार्धे जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ
सादयित्वाथाग्नीध्रमदन्त्यापाह इति' मदन्ति देवीरमृता
ऋतावृध इति' ताभिराद्रवेत्यथ मदन्तीरुपसृज्योपोत्थाय
विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यꣳशुरꣳशुष्टे देव
सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा
त्वमिन्द्राय प्यायस्वेति' यजमानमतिवाचयत्याप्यायय सखीन्त्सन्या
मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथा-
यतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति' विधृतीभ्यां
प्रस्तरꣳ सन्नुत्याप्रतिशृणꣳस्त्वेधायन्ति' न प्रस्तराभ्यावयति'
न बर्हिरनुप्रहरति' तं दक्षिणार्धे वेदे निधाय तस्मिन्नृत्विजो-
ऽरत्नी निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो
दिवे नमः पृथिव्या इति' सव्ये पाणौ प्रस्तरꣳ समाहृत्यान्य-
स्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते अग्ने
ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो
अपावधीꣳ स्वाहेति' परिधिषु प्रकाशानुपसंस्पृशति प्रचारे

१ Thus HTF; ०र्धवेलायां B.J.

२ Thus J only; समापयमान HF; समानयमान B Keś.; समानमान T.

तावꣳ यावदेनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति। यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति। तच्छङ्कुं निहन्ति। स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि। तच्छङ्कू निहन्ति। ते श्रोणी। यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि। तच्छङ्कू निहन्ति। तावꣳ यावदेनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति[1]। मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यꣳ षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं। तत्पदं निदधाति। स उपरवाणां कालो। ऽथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं। तदाग्नीध्र उपसीदति। स उत्करस्य कालो। ऽथोपरवाणां कालात्स्तम्बयजुर्हरति। ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं। त्रियजुषा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदिति।स्फ्यं हृतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण ग्रावाणं तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र खलानि भिन्दत प्रति निखान्पूरयत किꣳशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निखिष्ठतेति। यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन

१ BJT om. these two words.

चौष्णतीच; प्रक्रमान्प्रक्रामत्युदङ् चतुर्थं । तथात्वाकछ्यावृता शालायां परिश्रित्योत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्पाद्याथैनां प्रतिष्ठाप्यापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आहुत्य सꣳप्रात्येकस्तनव्रतं दोहयतेति । प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । चरामयामञ्च जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयाधस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकी[2] प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य[3] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यꣳ सꣳसादयोद्वासनायेति । वेधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं मि तृतीयं दधत्यथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वासयत्यग्नेरावृताग्निं प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्प्रैषो । ऽथैवैतद्बर्हिरनुसम्बध्यꣳ स्तृणाति मह्यदेवै तदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिग्रहीतेत्येक आहुरथाध्वते अनसौ प्रक्षालिते प्रपन्ने

---

१ After °श्चाय B ins. चपराह्ण ।

२ °पराह्णिके BH Keś.

३ Thus JF, Bh., Keś.; समस्यमस्योप° the other MSS.

योऽभ्युच्छ्रयते ऽभितः शालां निहतस्तयोर्दक्षिणं पर्यौह्य उत्तरम् छदीय । उद्धूतफलकं दक्षिणमनुद्धूतफलकमुत्तरं । तयोर्दक्षिणे वह्यं तद्वचनत्यथैनं मन्त्रवैश्यमावर्तयन्त्यथापेण[1] शालामरत्निमात्रमभित ऽन्वाञ्च् स्थापयित्वाथैनं प्रोक्षति वैष्णवी विष्णवे शुन्धेयामित्यथाहेहि यजमानेति । पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीं स्रुवाञ्च् स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्नी पदस्तीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चाद्भमुपसृत्य दक्षिणस्यां वर्तन्याञ्च् स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे स्वाहेत्यथैतेषां पदपांसूनामर्धान्यञ्जलावावपत्यथैनान्पांसूञ्स्रावेणाभिघारयति । सा प्राचीनातानेन पाणिना दक्षिणमक्षधुरमुपानक्त्या नो वीरो आयता कर्मण्यो यं सर्वे ऽनुजीवाम यो बहूनामसद्वशीत्यपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चाद्भमुपसृत्योत्तरस्यां वर्तन्याञ्च् स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय

---

1 Thus TF; comp. xv. 22 (आपवर्त॰); the other MSS. आश्रवपवर्तयंति।

हविर्धानस्योत्तरतो मेथीं निहन्त्यथैनाꣳ स्पन्द्यया सूपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेणाथाध्वर्युर्दक्षिणस्य[1] हविर्धानस्य युगुकात्प्राञ्चमरत्निं मीत्वा लोके[2] न्यस्य गर्तं खानयत्यथ दक्षिणायुगान्तात्प्राञ्चं बाहुं मीत्वा लोके[2] न्यस्य गर्तं खानयति । तावुभावुत्तरेणान्यं गर्तं खानयत्येवमेव प्रतिप्रस्थातोत्तरस्तौ गर्तान्खानयत्येवमपरतस्तेषु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति । तासूदञ्चौ वंशौ प्रोहन्त्यध्यस्यन्ति पुरस्ताद्रराटीं विष्णो रराटमसीति । विष्णोः पृष्ठमसीति मध्यमं छदिरधिनिदधाति । विष्णो श्नप्त्रे[3] स्थ इति ये अभितो भवतो । दक्षिणतश्चोत्तरतश्च परिश्रयन्ति । प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भाणं प्रवयति दर्भेण स्यूत्वा विष्णोः स्यूरसीति । विष्णोर्ध्रुवमसीति ग्रन्थिं[4] करोति[4] । तं तदानीमेव विस्रस्याशक्नुवन्तो ग्रन्थीन्हस्तकौशलैर्निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुमेवमपरे[5] द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशति[6] वैष्णवमसि विष्णवे त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य

---

१ अध्वर्युर् om. JHF.

२ Thus all.

३ Thus BHF, Keś. ( pr. m. ); श्नप्त्रे T, Prayogamālā; the visarga of विष्णोः is omitted by all the MSS. exc. H.

४ ग्रंथीकरोति B.

५ अपरे BTHJP ; अपरो F.

६ Thus ( °ष्ठत्य° or °ष्ठंत्य° ) all, except B, which has निस्तिष्ठतो ( comp. Keś. : कुशलः ) — अथैनद° HF; अथैनम° BTJP ( Bh., Keś. : अथैतद्धविर्धानमभिमृशति ) ।

शालामुखीयाच्छ्रोणेरनुस्पन्द्यꣳ षट् प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं । तदभ्रिं निदधाति । स औदुम्बर्यै काष्ठ । औदुम्बर्यै काष्ठादभ्रिमादत्ते ॥ २५ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तयौदुम्बर्या अवटं[1] परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथोद्गातारमाहोद्गातरेतौममौदुम्बर्या अवटं[2] खन प्राक् पुरीषमुद्वपतादिति । तꣳ स खनति वा खानयति वा । सो ऽत एव सदो विमिमीते । यथा त्रीणि छदीꣳषि तिर्यञ्च्येवं प्रकृष्णो । यथा त्रीणि छदीꣳष्यन्वञ्च्येवमुदकृष्णो । ऽपि वा यथा द्वौ भागावुदक् स्यातामेको दक्षिणत इति । तस्य त्रिश्रेणिगर्तामवखानयति[3] । सो ऽत एव प्राङ् द्रुत्वा[4] दक्षिणस्य हविर्धानस्य पुरो ऽक्षमुपरवान्विमिमीते प्रादेशमुखान्प्रादेशान्तरालानथोन्नेतारमाहोन्नेतरेतौमानुपरवा-

---

१ Thus only B; all the other MSS., here and infra, l. 9, औदुम्बर्यावटं, the second time also the Mantramālā.

२ Comp. note १.

३ Uncertain reading. त्रिश्रेणी° B; श्रोणि° H; श्रोश्रोणि° T; श्रोणि° JF; त्रिश्रेणि° P; comp. Padārthanirv. p. 310 (No. 174.). Keśavasvāmin glosses: तस्य सदसः गर्तपङ्क्तित्रयः खानयति । Read: श्रोण्यश्रि° ?

४ BH ins. चतुरः; Keś. has not read the word, as he glosses: सो ऽक्षेः सदसः प्राक्का etc.

स्फ्येन प्रादेशमुखाग्रादेशमात्रेणादायाग्नीधायान्वाहार्य उत्करमनु-परिहृत्य खनावसानानिति । तान्न खनति वा खानयति वा यावन्तो पुरीषं दक्षिणस्य हविर्धानस्यापरेणोपस्तम्भनं निवपति । तं चतुरश्रं खरं करोत्यथैनꣳ सिकताभिरपांश्च मिश्रं करोत्यथोपरवाणां कालादधिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तया यूपावटं परिलिखति यथाग्नेर्वेद्यर्धꣳ स्यादर्धवेद्यर्धे परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदेतौ यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपतात्चतुरङ्गुलेनोपरमतिखनतादिति । तꣳ स खनति वा खानयति वा । यावदेवाथाध्वर्युरन्वेष्टति तावदेव प्रतिप्रस्थातौदुम्बरीꣳ स्रुवं यजमानेन संमायाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाक्रुत्य वाचयति यवमतीः प्रोक्षणीर्बर्हिस्समाज्यस्थालीꣳ स्रुवं मैत्रावरुणदण्डꣳ हिरण्यमुदपात्रमित्येतत्समादायाच्छेहि यजमानेत्यौदुम्बर्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटादुपशेते । तां परस्तादर्वाचीं[1] प्रोक्षति ॥ २६ ॥

दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्यवटे ऽपो ऽवनयति शुन्धन्तां लोकाः पितृषदन इति । यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिरेकं व्यतिषज्यावस्तृणाति

१ Thus only Keś.; T: नापपरस्ताद् (Grantha!); the other MSS. पुरस्ताद् ।

इड्डायुमनु इड्डयो जुष्टा भवन्तु जुष्टय इति। दक्षिणतश्चोत्तरतश्च परिश्रयन्ति। प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भेणं प्रवयति दर्भेण त्वान्तरिक्षस्य स्यूरसीतीन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति। तं तदासीनेव विस्रस्याहाकुर्वन्तो ग्रन्थीन्हस्तकौशलैर्निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुमेवमपरे[१] द्वार्बाहू निष्ठिष्ठत्यथैनदभिमृशत्यैन्द्रमसीन्द्राय त्वेत्यथ महावेद्या उत्तराद्ंसीयाच्छ्रोर्वेद्यन्तेनाष्टादश प्रतीचः प्रक्रमान्प्रक्रामति। तदाग्नीध्रागारं विमिमीते यथान्तर्वेद्यर्धंं स्याद्बहिर्वेद्यर्धमथैनत्समुच्छ्रित्य परिश्रयन्ति। तस्य दक्षिणां द्वारं कुर्वन्त्याग्नीध्रागारस्य पार्श्वमाग्नी पश्चारत्निरेतेन मार्जालीयो व्याख्यातस्तस्योदीचीं द्वारं कुर्वन्ति।

॥ २७ ॥ सप्तमः ॥

अथात्रैव तिष्ठन्याचत्यभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीं स्रुवामधिषवणं चर्माधिषवणे फलके षट् छदूंष्यावाणं हिरण्यमुदपात्रमित्येतत्समादायाहेहि यजमानेति। पूर्वया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य नीड एतच्चर्मोत्सादयति। पुरोऽक्षमितराणि सङ्सादयन्नथोपरवाणां[२] कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति। तयोपरवान्परिलिखति पूर्वयोर्दक्षिणमेवाग्रे परिलिखितङ् रक्षः परिलिखिता

१ अपरो again (as p. 186) F only; the other MSS., also P, अपरे।

२ सङ्सादयन्नथ॰ BTJP; ॰दयन्त॰ the other MSS.

अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीति सर्वानेवानुपूर्वं ' खनति रक्षोहणो वलगहनो वैष्णवान्खनामीति सर्वानेवानुपूर्वमर्थेभ्यः पाꣳसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो यो ऽसमानो ऽरातीयति गायत्रेण छन्दसेत्यवबाढो वलग इति यजमानस्याधस्तद् पाꣳसूनुद्वपति पूर्वयोर्दक्षिणात्त्रै'-ष्टुभेन छन्दसेत्यपरयोर्दक्षिणाज्जागतेन छन्दसेत्यपरयोरुत्तरादानुष्टुभेन छन्दसेति पूर्वयोरुत्तराद्वैतान्पद्पाꣳसूनपस्करे परावपत्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायन्नथाप उपसृज्यै-तानवमृशतो ऽध्वर्युश्च यजमानश्च पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं[1] यजमानो ' ऽथ यजमानः पृच्छत्यध्वर्यो किमत्रेति ' भद्रमिति ' तन्नौ सहेत्यथाध्वर्युः पृच्छति यजमान किमत्रेति ' भद्रमिति ' तन्नौ सहेति ' यमेवाध्वर्युः प्रजानाति तं यजमानो ऽवमृशति ' दक्षिणयोरपरमेवाध्वर्युरवमृशति पूर्वं यजमानो ' ऽध्वर्युश्च पृच्छत्यथ यजमानो ' ऽपरयोरुत्तरमेवाध्वर्युरवमृशति दक्षिणं यजमानो ' यजमानो ऽच पृच्छत्यथाध्वर्युरुत्तरयोः पूर्व-मेवाध्वर्युरवमृशत्यपरं यजमानो ' ऽध्वर्युश्च पृच्छत्यथ यजमानो ' यजमान. प्रथमः पृच्छति यजमान उत्तमो ' ऽथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा

---

१ Here and infra F अभिमृशति instead of अवमृशति ।

## ERRATA.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| P. | xi. | l. | 5 | r. | The quotations. | | |
| P. | xii. | l. | 38. | r. | r. | i. s. o. | v |
| P. | xii. | l. | 42. | r. | not always. | | |
| P. | 44. | l. | 3. | r. | सर्वँ | i. s. o. | सर्वे |
| P. | 129. | l. | 18. | r. | ॰बर्हिषद॰ | | |
| P. | 130. | n. | २ | r. | प्रय॰ | i. s. o. | प्रर्य |
| P. | 145. | l. | 10. | r. | प्रदक्षिणं | i. s. o. | पदक्षिणं |
| P. | 168. | l. | 5. | r. | वषट्कृत | i. s. o. | वषड्कृत |
| P. | 178. | l. | 18. | r. | चतुर्थी॰ | i. s. o. | च तुर्थी॰ |
| P. | 187. | l. | 11. | r. | प्राक्शो | i. s. o. | प्रक्शो |
| P. | 190. | l. | 11. | r. | तस्मादीर्घं | i. s. o. | तस्मादी |
| P. | 204. | n. | ? | r. | TS. III. 5. 8. b. | | |
| P. | 218. | n. | १. | r. | r | i. s. o. | y |
| P. | 223. | l. | 8. | r. | दिक्षोति | | |
| P. | 235. | n. | ३. | r. | चयोष्ठा॰ | | |

एतस्मादाग्नीध्रमाद्रवति । यावद्ग्रावाणमन्तरमथ दक्षिणस्य हविर्धानस्यापरेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति लोकेभ्यो ऽथ वाचयति स्फ्यमुद्यच्छ चात्वालात्पुरीषꣳ सिकता इत्येतस्मादादायाग्नीध्रे यजमानेत्याग्नीध्रं हुत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालात्पुरीषꣳ सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीरिति । तं परिमण्डलं धिष्ण्यं[1] करोत्यथैनꣳ सिकताभिराभाग्निनं करोत्यथान्तःसदसं धिष्ण्यान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति । श्वात्रो ऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य । तुथो ऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छꣳसिन । उशिगसि कविरित्युत्तरतः पोतुरङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुरवस्युरसि दुवस्वानित्युत्तरतो ऽच्छावाकस्याथ दक्षिणे वेद्यन्ते मार्जालीयं धिष्ण्यं[2] निवपति शुन्ध्यूरसि मार्जालीय इति । सर्वेष्वेव रौद्रमनुवर्तयत्याग्नीध्रे ऽन्ततो निवपत्युदक्सꣳस्थाताया इत्यष्टौ न्यवाप्सीदित्यथाष्टावनुदिशति । सम्राडसि कृशानुरित्याहवनीयमुपतिष्ठते । परिषद्यो ऽसि पवमान इत्यास्तावं । प्रतक्वासि नभस्वानिति चात्वालमसंमृष्टो ऽसि हव्यसूद इति पशुश्रपणमथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठत ऋतधामासि सुवर्ज्योति-

---

१ Instead of धिष्ण्यं ( thus PBT Keś. ) HF have खरं, J धिष्ण्य खरं ; the word धिष्ण्य is found here and infra often written धिष्ण्य ।

२ om HJF.

25

रिति । ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनमथाचैव तिष्ठ-
न्गार्हपत्यमुपतिष्ठते ऽजो ऽस्येकपादित्यहिरसि बुध्निय इति स्वं
प्रत्याक्रान्तो भवन्ति । ॥ २९ ॥

अथाचैव तिष्ठन्संप्रैषमाह स्तृणीत बर्हिः प्र प्रतं यच्छत समपित्रतान्ध्वयध्वमासाद्यं बहुलꣳ स्तृणीत सदोहविर्धाने बहुले स्तृणीतोत्तरयोर्ण्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय पत्नीशाले गृह्यादयाग्नीध्राज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति । यथासंप्रैषं ते कुर्वन्त्यथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिꣳ स्तृणाति देवबर्हिरूर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति । तां बहुलां पुरस्तात्प्रत्यञ्च[1] स्तृणन्तो यन्त्यथान्तःपात्यं पृषदाज्यवन्त्याव्यानि ग्रहीत्वा परिकर्मिभ्य उपप्रदाय ब्रह्मणे राजानमुपयच्छति । तं ब्रह्मादायोत्तरत[2]स्तिष्ठत्युत्तरतस्तिष्ठन्नग्निमन्वानयत्युदग्ने[3] तिष्ठानु मामुदेहि विश्वैर्देवैर्यज्ञियैः संविदानः । सुवर्गे लोके यजमानꣳ हि धेहि मासै[4] शाखा आजत्यै यामुपेम इत्यथाध्यादधातीध्म[5] प्रणयनीयमुपोपयमनीः कल्पयन्ति शालाद्वार्यमन्वारब्धेष्वपित्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय

१ Thus TH; प्रत्यंचः PJF; प्रत्यंचꣳ B.

२ तिष्ठत्युत्तरतस् om. TJF; according to the Prayoga and the Vivaraṇa it is to be read.

३ °न्वानयत उद° PH; the Ṛc seems not to be found in any known Saṃhitā.

४ Corrected, मासेषाखा MSS.

५ Thus TP; °थाद्धा° F; °थाधा° the other MSS.

स्रुचि चतुर्गृहीतं गृहीत्वा प्राग्वंशीये वैसर्जनानि[1] जुहोति त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्यो ऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति । जुषाणो अप्तुराज्यस्य वेतु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा संप्रेष्यत्याग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति । विष्णुमाघायानुगच्छन्तो[2] । होतुर्वेशं यजमान वै भवति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्तीति[3] । यदस्याव ग्रस्तं भवति पूर्वं तेनाग्निमन्वञ्चन्त्यथाग्निप्रथमाः प्रतिपद्यन्ते ऽन्वग्राजा चाज्यैश्चान्वग्यावाणो[4] वायव्यानि । पूर्वया द्वारोपनिष्क्रामन्त्ययं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातावित्युत्तरेण सदः परीत्याग्नीध्रागारे ऽग्निं निधाय नयवत्याग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथैवैतद्यावोवायव्यꣳ[5] समुपधायोपातियन्ति राजा चाज्यैश्चाहवनीये स्रुवाहुतिं जुहोत्युरु विष्णो

१ ॰सर्जनं BTJ; but comp. TS. VI 3. 2

२ ॰मनूत्थायानु॰ BF.

३ इति om BTJ; ॰प्रवर्तयन्त्यथ यदस्या॰ T.

४ Thus F; the other MSS. ग्रावो ।

५ Thus BJHP; यावोवायव्यत्॰ T; यावोवायव्यां F; यावोवायव्यानि Keś. The remarkable यावोवायव्यम् occurs several times in the Karmānta sūtra. The Pronoun एतत् seems also to point to a neuter; but comp. Bh. and Keś: एतदिति द्रोणकलशोपलक्षणार्थम् ।

विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति । ॥ १० ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठन्तीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्ताद्ग्रन्थ्यालं प्रस्तरं गृह्णाति । पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति । ध्रुवौ विधृती तिरश्ची सादयति । विधृत्योराग्रन्थ्यालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्याथाप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमित्यथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदो ऽस्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदिति । संप्रदायोपतिष्ठत एतत्त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सह प्रजया सह रायस्पोषेणेति । नमो देवेभ्य इति प्राञ्जलिं करोति । स्वधा पितृभ्य इति दक्षिणा[1]न्यञ्चत्यथोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्यथाहवनीयमुपतिष्ठते सुवरभिविख्येषं वैश्वानरं ज्योतिरित्यथ यजमानमवान्तरदीक्षां विसर्जयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳस्नाति

१ Thus BJ, Bh.; दक्षिणान्यंचयोप॰ H. दक्षिणंमंचीन्याथोप॰ F; दक्षिणं· कान्याचयथोप॰ T; दक्षिणान्यंचयथोप॰ P.

सवीष्व मेखलां च मुष्टी धारय मैत्रावरुणाय कृष्णं प्रयच्छ यजमान इति त्वावतां नामयाहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुमनस्यः सुमनस्यामाक्रयन्निति । स एवमेवैतत्सर्वं करोत्यथ यूपाहुतिं हुत्वा यूपं यजुषा करोति । यूपावटं यजुषा करोति । तदेतद्यूपावटान्तम् ॥ ३१ ॥ अष्टमः ॥

अथ यूपस्याहुता यपसुच्छ्रयति । स्वर्यं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ यो दीक्षितः कृष्णस्तं याचति । तमादायान्तरेण चात्वालोत्करावुदङुपनिष्क्रम्य यत्रापस्तद्यन्ति[1] । नान्तमा वरूत्रीरत्येति । न स्थावराणां स्नाति । प्रतीपं तिष्ठन्स्नाति । छायायै चातपतश्च संधौ स्नाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माँ आविवासति हविष्माँ अस्तु सूर्य इत्यथैना आदाय प्रदक्षिणमावृत्य मध्ये ऽंसे निधायैतेनैव यथेतमेत्योत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमौपसदायां वेद्यां संस्पृष्टाः[2] सादयत्यग्रेवो ऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेत्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते । पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके । ॥ ३२ ॥ नवमः ॥

---

१ यन्तीति only T and Madh.; यन्ति the other MSS. also P and Keś..

२ Some of the MSS. have here and elsewhere संस्पृष्टाः ।

अथ वसतीवरीः परिहरिष्यन्नाह व्यपक्रामत मा वो ऽभिपरिहार्षमिति। यजमानायतने यजमान उपविशति। जघनेन गार्हपत्यं पत्न्यैना आदाय दक्षिणया द्वारोपनिष्क्रम्य सव्ये ऽंसे निधाय दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्यावृत्य दक्षिणतो यूपेन संस्पृष्टाः सादयतीन्द्राग्निर्योर्भागधेयी स्थेत्यथैना आदायोदङ्ङावृत्य दक्षिणे ऽंसे निधायैतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसदायां वेद्यां संस्पृष्टाः सादयति मित्रावरुणयोर्भागधेयी स्थेत्यथैना आदाय पूर्वया द्वारोपनिष्क्रम्य दक्षिण एवांसे निधायोत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्यावृत्योत्तरतो यूपेन संस्पृष्टाः सादयति विश्वेषां देवानां भागधेयी स्थेत्यथैना आदाय प्रदक्षिणमावृत्य सव्ये ऽंसे निधायैतेनैव यथेतमेत्य जघनेनाग्नीध्रीयं धिष्णियं संस्पृष्टाः सादयति यज्ञे जाग्रतेति। ॥ २९ ॥

अथ पयांसि विशास्ति या सम्राड्धुक् तस्यै दधिघर्माय दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या आशिरे पयश्च मन्थांश्च कुरुत श्रृतातङ्क्यमादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः कुरुत चतुरो [1]ऽभ्यूणांस्त्रीनुदचनामयुज[2] एकधनांस्त्यवमाने-

---

१ Most of the MSS. read ०रीषत० ।

२ Thus PHBJ, Bh., Mantramālā, Keś ; चदंचमान् F. Prayoga I.O., Padārthanirv ; चद्चाम् T.

काद्ग्रपरमाᳲस्ततो रशनास्ततो वपाश्रपण्यौ दधिनिधानवर्हि१-
रौदुम्बरान्महापरिधीन्कुर्वन्त सुवाः सुवश्रपणीमाकृयन्तीति।
यथार्थमेवं ते कुर्वन्त्यथैतानन्वृणामायातयत्युत्तरस्य२ हविर्धानस्य
नीड आधवनीयं। प्रउगे पूतभृतं। तयोः समान उद्धनं।
आग्नीध्र एकᳲ सोद्धनं। मार्जालीय एकᳲ सोद्धनमाग्नीध्र
एताᳲ रात्रिं यजमानः संविशति। हविर्धाने राजानं गोपा-
यन्ति। ॥ ३४ ॥ दशमः ॥

॥ इति षष्ठः प्रश्नः ।

---

१ क दशमे तु यथायथौ दधनयनिधानवर्हि, Mantramâla Padarthau iv. Prayoga I O.

२ Thus PF only; अथैतान० BHTJ.

अथातो महारात्र एव बुध्यन्ते। संप्रोष्यन्त्येतानृत्विजोऽध्वर्युꣳ होतारं ब्रह्माणमुद्गातारं प्रतिप्रस्थातारं प्रस्तोतारं प्रशास्तारं ब्राह्मणाच्छꣳसिनमच्छावाकं नेष्टारं पोतारꣳ सदस्यमुन्नेतार-माग्नीध्रं ग्रावस्तुतꣳ सुब्रह्मण्यं प्रतिहर्तारं ये चान्ये परिकर्मिणो भवन्ति। ते हस्तपादान्प्रक्षाल्याग्नीध्रे यजमानमुपसंगच्छन्ते। ऽथाध्वर्युर्हस्तौ संनमते कर्मणे वां देवेभ्यः शकेयमित्यथाचैव तिष्ठन्संप्रैषमाहोन्नेतर्यानि वायव्यानि द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयाग्नीदाज्य-मधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति। यथासंप्रैषं ते कुर्वन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभि-मृशत्यग्निर्मूर्धा दिव इति। वैष्णव्या हविर्धानं विष्णो त्वं नो अन्तम इत्याग्नेय्या स्रुचोऽयमग्निः सहस्रिण इति। वायव्यया वायव्यानि वायो शतꣳ हरीणामित्यैन्द्र्या सद इन्द्रं विश्वा अवीवृधन्नित्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपो-त्तिष्ठन्नौध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं[1] गृह्णात्येकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राक्भिस्त्र्यौदुम्बरान्महापरिधीन्परिदधाति नित्येन परिधानेनाथैनान्योगेन युनक्ति। युनज्मि ते पृथिवीं ज्योतिषा सहेति मध्यमं। युनज्मि वायुमन्तरिक्षेण ते सहेति दक्षिणं। युनज्मि वाचꣳ सह सूर्येण त इत्युत्तरमथ स्रुचः सन्ना अभि-मृशति युनज्मि तिस्रो विपृचः सूर्यस्य त इत्यथाप उपस्पृश्याहेहि

---

१ Behind पुरस्तात् HJ ins. चात्वालं।

यजमानेति। पूर्वया द्वारा हविर्धानं प्रपाद्याथैतयर्मी[1] यज्ञ-कयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[2] यस्य प्रतितिष्ठेति वा तूष्णीं वा। तस्मिन्संमुखाम्नायवः कृत्वा दक्षिणस्य हविर्धान-स्यान्तरेणेषे राजानमुपावहरति रुद्रे त्वा मनवे त्वा सोम राजन्नेष्ववरोहेति द्वाभ्यामथैनमुद्गातृभ्यः प्राहुस्तस्मिंस्तावद्वन्ति यत्ते विदुरथाप उपस्पृश्याहेहि यजमानेत्याग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा पत्नीतारं मनसानुद्रुत्याग्नीध्रे जुहोत्य-न्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एवा-न्यां जुहोत्यामन्यास्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः[3] स्वाहेत्यथाहवनीये घृतानुषिक्तꣳ शकलमभ्यादधाति तूष्णी-मथाचैव तिष्ठन्संप्रैषमाह ॥ १ ॥

प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वप प्रतिप्रस्थातः खरे पात्राणि युङ्क्ष्वेति। यथासंप्रैषं ते कुर्वन्ति। प्रतिपद्यत एष होता प्रातरनुवाकं। यच्छति ब्रह्मा वाचमाह्वयति सुब्रह्मण्यः सुब्रह्मण्यां। तस्यामाहूतायां ब्रह्मा वाचं विसृजते। निर्वपत्येव आग्नीध्र ऐन्द्राग्नेकादशकपालान्सवनीयाꣳस्तेषां व्रीहिष्वेव हविष्कृतमुद्वा-दयत्युपोत्पच्छन्ते यवानथ प्रतिप्रस्थाता खरे पात्राणि युनक्ति।

१ Thus ( चर्येतय° ) Keś.; चर्येषय° the MSS.

२ चास्तृणाति B.

३ °भिशस्त्या PBTJ, Mantramālā; °शस्त्यै Prayoga IO, Padārtha-nirv.; °शस्त्र H : °शस्तै F.

स यन्ता ग्रभ्यतीरिषः स्वाहेत्यथ यदुक्थ्य एतेनैव यजुषा मध्यमे परिधौ निमार्ष्ट्यथ यदतिरात्र एतदेव यजुर्वदन्प्रपद्यते। यज्ञक्रतूनां व्यावृत्त्या इति ब्राह्मणमथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयत्यथो-दुन्नाधवनीयं सर्वत्र एव मैत्रावरुणचमसीयाः पर्यस्यति। तृतीयं वसतीवरीणामवनयति। तृतीयमेकधनानां। पुरो ऽन्यं वसतीवरीः सादयति। पश्चादन्यमेकधनानामथान्तरेण हविर्धाने उपविश्यौदुम्बरं पात्रं चतुःस्रक्ति याचति। तस्मिन्बर्हिषी अन्तर्धाय प्राजापत्यं दधिग्रहं गृह्णात्युपयामगृहीतो ऽसि प्रजा-पतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्यो ऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्य इत्यपोद्धृत्य बर्हिषी अथैनमादायोपो-त्तिष्ठति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति। पूर्वया द्वारोप-निष्क्रामत्यपेन्द्र द्विषतो मनो ऽप जिज्यासतो जह्यप यो नो ऽरातीयति तं जहीत्यथैत्याहवनीये जुहोत्यन्वारब्धे यजमाने प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौष-धीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अछ्छिद्रा[१] अजायन्त

---

१ Conjecturally. The best MSS. (BJ) and the Mantramālā read अख्खिद्रा which seems to mean: akhkhidrā, thus P. By adding a little stroke we get the reading I have put in the text, on account of the usual form the verb छिदति has in the Taittirīya texts (छ्छिदति). Comp. TS. III. 5, 8, C.

तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहेत्यथास्य संज्ञानमन्तःपरिधि निनयति । धेनुवरं[1] वानडुद्वरं वा दद्यादिति ह स्माह बौधायनो । दाद्म पष्ठौहीरित्याश्मौगविर्षभमिति कात्यो । मणिकुण्डलमिति राथीतरः । ॥ ४ ॥ प्रथमः ॥

अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणोपे उपावहृत्य चर्मणि निदधाति । तासु निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत आयुर्मे तर्पयतेति प्रतिपद्य गणा मे मा वितृषन्नित्यातस्ता यजमानाय संप्रदायाथैतेषां ग्राव्णां यः सुजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमित्यथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपाꣳशुसवनमभि मिमीत इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावत इति । पञ्चकृत्वो यजुषा । पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानोऽर्धवेलाꣳ राज्ञो मिमीते । ऽथातिशिष्टꣳ राजानमुष्णीषेण विग्रथ्य दक्षिणस्य हविर्धानस्यान्तरेणोपे उपातिहृत्य[2] मौञ्ज उत्सादयत्यथ मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति श्यात्रा स्थ वृत्रतुरो

---

१ धेनू॰ H, but comp IV. 11 (page 127, 14).

२ Thus BJTF; उपावहृत्य H.

राधीगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्वित्यथैनꣳ संमृशति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति । तिरश्चीनं ... अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टमित्यथ ...वापयत्यवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोममिति । संहतस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ पञ्चाꣳशून्दधते । ऽथैतेनैव पाणिनोपाꣳशुपात्रमादत्ते । ऽथोपसृष्टꣳ राजानमष्टौ कृत्वो ऽथ ऽभिषुणोति । सो ऽꣳशौ स्कन्नं वाचयत्या मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्यथाञ्जलिनोपहन्ति[*] तूष्णीमन्तर्दधाति प्रतिप्रस्थाता । प्रथमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्निति । सप्त एतावꣳशू । तथोपसृष्टꣳ राजानमेकादशकृत्वो द्वितीयमभिषुणोति । तथाꣳशौ स्कन्ने वाचयति । तथाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थाता । मध्यमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूत इति । सप्त एतावꣳशू । तथैवोपसृष्टꣳ राजानं द्वादशकृत्वस्तृतीयमभिषुणोति । तथैवाꣳशौ स्कन्ने वाचयति । तथैवाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थातोत्तमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्देवो

---

* About the interpunction of this passage I am not sure.

प्रतिप्रस्थातोत्तरत आग्नीध्रो ऽन्तरेण प्रतिप्रस्थातारं चाग्नीध्रं च यश्चतुर्थो ऽभिषुणोत्यथोन्नेतारमाहान्नोपसृजेत्युपसृजत्युन्नेताधवनीयादुदचनेनोपर्यर्धे होतृचमसे ऽꣳशून्परिप्लावयन्ति प्रागपागुदगधराक्तास्ता दिश आधावन्त्वम्ब निष्वरेत्येष निग्राभ आप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति निग्राभमुपयन्त्याप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति[1] निग्राभमुपयन्त्याप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति[1] न चतुर्थं निग्राभमुपयन्त्यथैनꣳ सुसंभृतꣳ संभरणाꣳ संभृत्योन्नेत्र उत्प्रयच्छति तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीय ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति तदुन्नेताधवनीये[2] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेऽक्षे उपावहृत्य[3] चर्मणि निदधाति तस्मिन्त्संमुखान्ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोह्यथोद्गाता वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु द्रोणकलशमभ्यूहति तस्मिन्नुदीचीनदशं दशापवित्रं वितन्वन्ति तेन तथा कृतेनादित्यस्योदयमाकाङ्क्षन्त उदित आदित्ये ऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे

१ The passage निग्राभमु ...... ऽभिषुण्वन्ति, found in PHF, is missing in BTJ.

२ Thus JP: तमुन्नेता॰ TFB.

३ Thus BJTP, उपानिहृत्य H; उपानिहृत्य F.

राज्ञो ऽयं वां मित्रावरुणेत्यनुद्रुत्योपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति। बर्हिषी अन्तर्धाय पयसा श्रीणात्यपोद्धृत्य बर्हिषौ दशापवित्रेण परिमृज्य सादयत्येष ते योनिर्ऋतायुभ्यां त्वेत्यथोपातीत्याश्विनपात्रꣳ शुक्रपात्रमादत्ते। तदेतद्बैल्वं वा पालाशं वा स्रक्त्यं भवति। तेन गृह्णात्यतिपवमानस्य राज्ञो ऽयं वेनश्चोदयदित्यनुद्रुत्योपयामगृहीतो ऽसि शण्डाय त्वा जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिर्वीरतां पाहीत्यथादत्ते मन्थिपात्रं। तदेतद्वैकङ्कतꣳ स्रक्त्यं भवति। तेन गृह्णात्यतिपवमानस्य राज्ञस्तं प्रत्नथेत्यनुद्रुत्योपयामगृहीतो ऽसि मर्काय त्वा जुष्टं गृह्णामीति। बर्हिषी अन्तर्धाय सक्तुभिः श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयत्येष ते योनिः प्रजाः पाहीत्यथादत्त आग्रयणस्थालीं। तया गृह्णात्यतिपवमानस्य राज्ञो ये देवा दिव्येकादश स्थेत्यनुद्रुत्योपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीत्यथैनां[1] त्रिरभिहिङ्करोति ॥ ६ ॥

हिं हिं हिं सोमः पवते सोमः पवते सोमः पवते ऽस्मै ब्रह्मणे पवते ऽस्मै क्षत्राय पवते ऽस्मै विशे पवत इषे पवत ऊर्जे पवते ऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ऽस्मै सुन्वते यजमानाय पवते मह्यमित्युपाꣳशूक्त्वा ज्यैष्ठ्याय पवत

---

१ Thus PH; थैनं B.IT; थैनत् F; थैन Koś.

इत्युच्चैरथैनमधिवदत्याग्रयणो ऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणेति। परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्युपब्दिमतो ऽत ऊर्ध्वं ग्रहान्गृह्णाति। पिङ्गलवत्य मणिमो हृडन्त इति तृणवत्यर्चा आहव्यतो गृह्णीयादिति ब्राह्मणमथादत्त उक्थ्यस्थालीं। तया गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वोक्थायुव इत्यथादत्ते ध्रुवस्थालीं। स आह ये पूर्वया द्वारा प्रापत्सत[1] प्राञ्चस्ते निष्क्रामन्तु ये ऽपरया प्रत्यञ्चस्ते मा वो ऽभिपरिहारिषमिति। जघनेनाभिषोतॄन्सोमोद्धरणानभिपरिहृत्योत्तरत उपयच्छति[2] मूर्धानं दिवो अरतिं पृथिव्या इत्यनुद्रुत्योपयामगृहीतो ऽस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामीत्यथैनमधिवदते ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तम इत्यथैनमथाहृतं[3] प्रतिपर्याहृत्योत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुप्रोह्य सादयत्येष ते योनिरग्नये त्वा वैश्वानरायेति। ध्रुवेण राजानं परिदधात्यथोपर्यर्धे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्सानु-

---

१ Thus emended. All MSS also P Bh., Mantramālā, Prayoga 10, Padārthamrv. have प्रापत्सत:, only T, K4 प्रापत्स्यत:।

२ Thus PBTH Bh., उपयच्छ० F K4.

३ अथैनं instead of अथैनद् T; अथैनंयथाहृतं P (pr. m.), अथैनमथा० P (sec. m).

न्युप्तैर्मन्त्रैः । स यद्ध वा यथान्युप्तमभिजुहोति सप्त त इत्याग्नीध्रे[1] ऽन्ततो जुहोति । यद्ध वै स्वाहास्वाहेति स्वाहेत्येवान्तत आग्नीध्रीये[1] जुहोत्युदक्यꣳस्रुताया इत्यथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीꣳ सादयत्यथ सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । ॥ ८ ॥ द्वितीयः ॥

अथाध्वर्यू रशनाहस्तौ यूपमभ्येत्युद्दूह्य पूर्वाꣳ रशनां नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । समानं कर्मा प्रवरात्प्रसिद्धꣳ होतारं वृणीते । ऽथाश्रावयत्यो श्रावयास्तु श्रौषडग्निनाध्वर्यू आध्वर्यवादित्यहं चासौ च मानुषाविति । प्रतिप्रस्थातुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषण्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादित्यसौ मानुष इति । मैत्रावरुणस्य नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्रो ब्रह्मा ब्राह्मणादित्यसौ मानुष इति । ब्राह्मणाच्छꣳसिनो नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषण्मरुतः पोत्रादित्यसौ मानुष इति । पोतुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषड् ग्नावो नेष्ट्रादित्यसौ मानुष इति । नेष्टुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निराग्नीध्रादित्यसौ मानुष इत्यग्नीधो नाम गृह्णाति । तेषां प्रवृतःप्रवृत एव प्रवृताहुतीर्जुहोति । जुष्टो वाचो भूयासम्‌ जुष्टो वाचस्पतये ... स्तोमꣳ समर्धय सूर्यो मा देवो देवेभ्यः पात्वित्येताभिरध्वर्यू जुह्वतो ।

१ चाग्नीध्रीये PBH, comp. VI. 29 (page 193, 14).

२ चाग्नीध्रे TJ.

यथावेदमितरे जुह्वत्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्ह[1] देवीनां विशां पुरएतायं सुम्नयजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतं हिमा द्वा यू राधांसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति । समानं कर्मा वपायै । वपया प्रचर्य वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ यजमानमुत्करे स्फ्यत्रिधनानुपस्थापयति ॥ ६ ॥

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृत स्थ ते मास्मिन्यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तामित्यथ नमो ऽग्नये मखघ्ने मखस्य मा यशो ऽर्यादित्याहवनीयमुपतिष्ठते । नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं । नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमथ प्राङुत्सृत्य जपति दृढे स्थः शिथिरे समीची मांहसस्पातं सूर्यो मा देवो दिव्यादंहसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्य इत्यथ प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संप्रपति देवी द्वारौ मा मा संताप्तमित्यथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या इत्यथायनाहविःसदसं दक्षिणं निरस्यत्यहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो

---

१ Comp IV. 6 (page 116, 13).

ऽन्तरयाकान्तर इत्युपनिष्क्रम्युपनिष्क्रम्य उद्धृत्य नेपमित्यपेते संबो-चर्वे पातं मा द्यावापृथिवी अद्याह्न इत्यथ दक्षिणार्धं परेत्य आगन्त पितरः पितृमानहं युष्माभिर्भूयासं सुप्रजसो मया यूयं भूयास्तेत्यथोत्तरार्धं परेत्य । उदक्संस्ताया इति । ॥ १० ॥

अथेमावध्वर्यू आहवनीयमभ्येत्याहवनीयमुपतिष्ठेते । एवमाग्नीध्रीयमेवं होत्रीयमेवं प्राञ्चावावृत्य जपतः । एवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संसृपतः । एवं सदः प्रपद्येते । एवमासनाभ्यां बहिःसदसं तृणे निरस्यतो । दक्षिणमेवाध्वर्युरार्त्विजं निश्रयमाण उपनिक्रम्योत्तरं प्रतिप्रस्थाता वर्मिणे समीक्षेते । एवं दक्षिणार्धं चोत्तरार्धं च परेतेते । उदक्संस्ताया इत्यथैते वषट्कर्तार आहवनीयमभ्येत्याहवनीयमुपतिष्ठन्त । एवमाग्नीध्रीयं । तमुत्तरेण परियन्त्येवं[1] होत्रीयमेवं प्राञ्च आवृत्य जपन्त्येवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संसृपन्त्येवं सदः प्रपद्यन्ते । ऽथैव धिष्ण्यानुत्तरेणात्ताकम्य[2] धिष्ण्यं परीत्यैवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्त्येवं स्वं स्वमेव धिष्ण्यमनूपविश्यन्त्यर्वामिके समीक्षन्त । एवं दक्षिणार्धं चोत्तरार्धं च परेत्य । उदक्संस्ताया इत्यथैते सर्वे उद्गातारो ब्रह्मा सदस्य इत्यवषट्कर्तार आहवनीयमभ्येत्याहवनीयमुपतिष्ठन्त । एवमाग्नीध्रीयं । तमुत्तरेण परियन्त्येवं होत्रीयमेवं

१ BF ins. च ।

२ All the MSS. read here and infra पर्येति ।

प्राञ्च आवृत्य अपरयैवं प्रदक्षिणमावृत्योत्तरेण सदः परीत्यैवमपरे द्वारौ सदसः संसृप्यैवꣳ सदः प्रपद्यन्त। एवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्त्यौदुम्बरीमेवोद्गातारः पर्युपविशन्ति। दक्षिणत उदङ्मुखौ[1] ब्रह्मा सदस्य इत्युपविशत। एवमिमे समीक्षन्त। एवं दक्षिणार्धे चोत्तरार्धे च परेक्षन्त। उदक्संस्थताया इत्यथैतेषां[2] विसꣳस्थितसंचरो। ऽन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च ये ऽधिष्णिया। अथ धिष्णियवन्तः स्वꣳस्वमेव धिष्णियमुत्तरेणोत्तरेण परियन्ति। ते सꣳस्थिते सवने यथाप्रसृप्तमेव विनिःसर्पन्ति। ॥ ११ ॥ तृतीयः ॥

संप्रसृप्तान्विदित्वाध्वर्युः सवनीयान्पुरोडाशान्त्सादयत्यथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीते। मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति। पुरस्ताद्धाना। दक्षिणतः करम्भं। पश्चात्परिवापमामिक्षामुत्तरतो। ऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्यान्तर्वेद्यामादयत्यथ जुह्पभृतोरुपस्तृणान आह प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति। द्विः पुरोडाशस्यावद्यति। द्विर्धानानां। द्विः करम्भस्य। द्विः परिवापस्य। द्विरामिक्षाया। अभिघारयति। प्रत्यनक्त्ययोपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति।

---

१ Thus HT; ॰मुखो BJFP.

२ Thus PJBFH Kes.; ॰थैषां T Bh.

द्विरभिघारयति । स प्रत्यवनत्याक्रम्याश्राव्याह प्रातः प्रातः-सावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोत्यथ समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा पात्र्यामिडाꣳ समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यंसु हैके संयन्ति पशव इडेति वदन्तो ऽथ प्राङ्गायन्नाह वायव इन्द्रवायुभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिर्ग्राह्यं[1] गृह्णाति द्रोणकलशात्परि-प्लुता पात्रेणादित्यस्थाल्या औपयये पात्र उपयामगृहीतो ऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्यथा-वादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं[1] प्रयच्छत्यथ वै भवत्यैन्द्रवायवमादायाघारमाघारयेदिति । स आज्यस्थाल्याः[2] स्रुवेणोपहत्यैन्द्रवायवमादायाघारमाघारयत्यध्वरो यज्ञो ऽय-मस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरो ऽसि स पिन्वस्व घृतवद्देव सोम स्वाहेत्यथाश्रावयत्यो श्रावयास्तु श्रौषडायव इन्द्रवायुभ्यां प्रेष्येति । वषट्कृते ऽध्वर्युः पूर्वो जुहोति । द्वितीयं वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो न

---

१ Here and infra, without *y*, BJT Bh. (Grantha MS. and Dev. MS.); प्रतिनिर्ग्राह्यं FHP Dvaidha, Kes., Padārthanirv. (F once without *y*).

२ ॰ल्या FH; ॰ल्याः BT; ॰ल्यां J.

इन्द्रवायू अभिदासति आहृत्य उपिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति देवेभ्यस्त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाह मित्रावरुणाभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थाता मैत्रावरुणस्य प्रतिनिर्ग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणादित्यस्थाल्या औपयजे पात्र उपयामगृहीतो ऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादायोपनिष्क्रामत्युपनिष्क्रामत्येवाध्वर्युर्यथावादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषण्मित्रावरुणाभ्यां प्रेष्येति । वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो नो मित्रावरुणावभिदासति आहृत्य उपित्पीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेदेवेभ्यस्त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाहाश्विभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थाताश्विनस्य प्रतिनिर्ग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणादित्यस्थाल्या औपयजे पात्र उपयामगृहीतोऽसि ऋतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादा-

थोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्यथावादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां प्रेष्येति । वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो नो ऽग्निमावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती । इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा देवेभ्य इति । ॥ १२ ॥

स यद्यु हैतैः सꣳस्रावैरुपर्यर्धा स्थाली भवत्येतेनैनां पात्रेणापिदधाति । यद्यु वै नोपर्यर्धा भवति द्रोणकलशादेनामुपर्यर्धां[1] कृत्वैतेनैव पात्रेणापिदधाति विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व तं ते दुश्चक्षा मावख्यदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाहोन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु त्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपतिष्ठस्वेति । यथासंप्रैषं ते कुर्वन्ति । द्रोणकलशादेव प्रथममुन्नयन्त्यथ[2] पूतभृतो । ऽथ द्रोणकलशात्तूभयतःशुक्रा । होतृचमसमेव प्रथममुन्नयन्ति[3] । यथोपपादमितरान्समुन्नीयोन्नरवेद्याꣳ सꣳसादयन्त्यथ[4] प्रतिप्रस्थाता चतुर्णाꣳ शकलानां द्वौ

---

1 Before एनामु॰ BFHP ins. एव । 2 Thus BHTP; ॰यन्त्यथ F.
3 Thus BFHP ॰यति T. 4 Thus BHFP Keś.; सादयन्त्यथ JT.

प्रोक्षति । द्वावप्रोक्षितौ भवतः । प्रोक्षिताभ्यामपिधायाप्रोक्षिताभ्यामुपयच्छतः । शुक्रमेवाध्वर्युरादत्ते । मन्थिनं प्रतिप्रस्थाता । यथावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता । तौ जघनेनोत्तरवेदिं यन्तौ संधत्त आयुः संधत्तं तन्मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतꣳ श्रोत्रꣳ संधत्तं तन्मे जिन्वतमिति । षड्भिः संधाभिः संधाय व्युत्क्रामत । सुतो ऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेत्यध्वर्युर्दक्षिणेनोत्तरवेदिं परिक्रामति । सुतो ऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेति प्रतिप्रस्थातोत्तरेणोत्तरवेदिं परिक्रामति । तौ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमभिद्रवत इन्द्रेण मयुजा वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासमित्यंसान्तरेण यूपं चाहवनीयं च यन्तौ संधत्त आयु स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तमपान स्थो ऽपानं मे धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तं व्यान स्थो व्यानं मे धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तꣳ श्रोत्रꣳ स्थः श्रोत्रं मे धत्तꣳ श्रोत्रं यज्ञाय

धत्तꣳ ओवं यज्ञपतये धत्तमिति। षड्भिः संधाभिः संधाय व्युत्क्रामतः ॥ १३ ॥

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो। निरस्तः शण्डः सहामुनेत्यध्वर्युर्यं यजमानो द्वेष्टि तं मनसा ध्यायति। निरस्तो मर्कः सहामुनेति प्रतिप्रस्थाता यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य प्रोक्षितावभ्याधत्तः। शुक्रैषा ते समित्तया समिध्यस्व स्वाहेत्यध्वर्युर्मन्थिन्नेषा ते समित्तया समिध्यस्व स्वाहेति प्रतिप्रस्थाता। तस्मिन्काले चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते। ऽथाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषट् प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति। वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति। वषट्कृतानुवषट्कृते द्विर्जुहुतस्तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वत्यथ संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तध्वꣳ होतुश्चमसाध्वर्यवुपरमैहि प्रतिप्रस्थातरुत्तरार्ध आहवनीयस्य मन्थिनः संस्रावं जुहुधीति। यथासंप्रैषं ते कुर्वन्त्यथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति

वा तूष्णीं वाथ प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः संस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ थाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च सदे यथायतनꣳ सादयति । यन्त्येते[1] मर्त्विजां चमसा । अथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते । तेषां मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृतानुवषट्कृते द्विजुहोति । ब्रह्मन्यज पोतर्यज नेष्टर्यजाग्नीध्रयजेति पर्ष होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यायेण होतारमुपविशत्ययाड्ग्नीदिति । स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीत्यथ होतादत्त ऐन्द्रवायवपात्रमात्तमेवाध्वर्युरन्वारभते । अन्वारब्धे ऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद । तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहीत्यथ होता भक्षयत्यथाध्वर्युरथैनद्द्रोणे ऽनुषजति । तद्धोता यथायतनꣳ सादयत्यथ होतादत्ते मैत्रावरुणपात्रमात्तमेवाध्वर्युरन्वारभते । अन्वारब्धे ऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद । तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीत्यथैनद्द्रोणे ऽनुषजति । तद्धोता यथायतनꣳ सादयत्यथ होतादत्त आश्विनपात्रमात्तमेवाध्वर्युरन्वारभते ।

---

१ Thus (सादयतियंत्यैते) PHT and Keś.; the other MSS. सादयंत्यैते (B) or सादयत्येते JF.

ऽन्वारब्धे ऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीति सर्वतः परिहारमाश्विनं भक्षयतीति ब्राह्मणमथैनद्धोत्रे ऽनुषजति तद्धोता यथायतनं सादयत्यथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते ॥ १४ ॥

उपहूयमानायामिडायामुपप्रस्थायन्ति चमसानुपहूतायामिडायामनाहितमग्नीधे भवत्यथैतानि द्विदेवत्यपात्राण्यतिरिक्तानि करोति पुरोडाशशकलमैन्द्रवायवपात्रे प्राश्यत्यामिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे ऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिष्क्रम्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयति तान्या तृतीयसवनात्परिशेरे ऽथाग्नीध आदधाति षडवत्तं प्राश्नन्ति मार्जयन्त इडोपहूतांश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति यथाचमसं चमसाञ्छिन्वन्त इत्यात्मानं प्रत्यभिमृशन्त आप्याययन्ति चमसानाप्यायस्व समेतु त इति सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध[1] ऐन्द्राग्नायाथैषो ऽच्छावाको ऽप्येष सद आस्ते तस्मै भक्षत्पुरोडाशशकलमादधद्वाहाच्छावाक[2]

---

१ Thus PHJF Bh. Keś.; चवालंब॰ B; चवा॰ or चपा॰ T (Grantha!)

२ Thus JHFP; चमदधद्॰ B; चपदधर॰ T.

वदस्व यत्ते वाच्यमिति । स यथाच्छावाकस्याभिज्ञानात्युपो ब्रह्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति तदाह होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्वेति । तमृचा होतोपह्वयते । ऽध्वर्य आह्वयस्व होत्रीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्यु-श्चयस्वोभयतःशुक्रं कुरुष्वेति । स तथा करोत्यथ गाकेत्या-च्छावाकचमसमादायाश्राव्याहाच्छावाक यजेति । वषट्कृतानु-वषट्कृते जुह्वा हरति भक्षं । स यद्यभिज्ञ अच्छावाक उपहव-मिच्छत उपैवैनं ह्वयते । नो त्वेव संभक्षयतः[1] । सौदत्यस्य नाराशंसं आप्यायितो । ऽथाहाच्छावाक सीद नेष्टः पत्नीमु-दानयाग्नीदच्छावाकं मे सन्नं प्रब्रूतादिति । सौदत्येषो ऽच्छावाको जघनेन स्वं धिष्ण्यमानयति नेष्टा पत्नीं पन्नेजनीरादाय[2] प्रेह्युदेह्यौत्येतेन निगदेनाथैनां पूर्वया द्वारोपनिष्क्रमय्यापरया द्वारा सदः प्रपाद्य जघनेन नेष्टुर्धिष्ण्यमसंचरे सामपथे पन्नेजनीः[3] सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पन्नेजनीः सादयामि यज्ञाय वः पन्नेजनीः सादया-मीत्यथाहाग्नीध्रः सत्तो ऽच्छावाको ऽच्छावाकं सत्तमुप पन्नेज-नीरसीषदन्नित्येतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यग्ना स्यात्पत्नी पत्नीशाले । ॥ १५ ॥ चतुर्थः ॥

---

१ Thus HJF Bh. Ke; ॰भक्षयति BT.

२ Thus F; पान्नेजनी॰ BT, पान्नेजनं कलशं instead of पन्नेजनीर् HP, comp. VII. 3 (page 203. 10).

३ Thus all except J, which has पान्नेजनीः ।

अथर्तुपात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशाद्गृह्णात्युपयामगृहीतोऽसि मधवे त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाता गृह्णात्युपयामगृहीतोऽसि माधवाय त्वा जुष्टं गृह्णामीति । यथावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्दार्वाङ्गं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता दार्वाङ्गं निश्रयमाण उपरमत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युः । स गृह्णात्युपयामगृहीतोऽसि शुक्राय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतोऽसि शुचये त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युः । स गृह्णात्युपयामगृहीतोऽसि नभाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युर्विपर्यस्य पात्रे । स गृह्णात्युपयामगृहीतोऽसीषाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य

पात्रं । स गृह्णात्युपयामगृहीतो ऽस्यूर्जाय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतो ऽसि सहाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतो ऽसि सहस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युर्विपर्यस्य पात्रं । स गृह्णात्युपयामगृहीतो ऽसि तपाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रं । तमाह प्रतिप्रस्थातरुपैतेन पात्रेण रमेत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येत्यध्वर्यू यजतमित्याह प्रशास्ता । होतरेतद्यजेत्याहाध्वर्युर्वषट्कृते जुहोति । सो ऽपैवामीनं प्रतिप्रस्थातारमनुप्रपद्यते । प्रतिप्रस्थाताच पूर्वो गृह्णात्युपयामगृहीतो ऽसि तपस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युर्गृह्णात्युपयामगृहीतो ऽसि मंसर्पो ऽस्यंहस्पत्याय त्वा जुष्टं गृह्णामीति । यथावादायोपनिष्क्रामतो । दक्षिणामेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता[1] । प्रतिप्रस्थाताच आवयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । गृहपते यजेत्याह प्रशास्ता ।

---

1 om. BT.

होतरेतद्यजेत्याह गृहपतिर्वषट्कृते सहोभौ जुहुतो । ऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति[1] । तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाणेति । तेन प्रतिप्रस्थातैन्द्राग्नं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणैन्द्राग्नी आगतं सुतमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रं संभक्षयत्यृतुना पीतस्येति होत्रा पोत्रा नेष्ट्राग्नीधा ब्राह्मणाच्छंसिना मैत्रावरुणेनेत्यथ विपर्यस्य पात्रं होत्रैव चतुः संभक्षयत्यृतुभिः पीतस्येति होत्रा पोत्रा नेष्ट्राच्छावाकेनेत्यथ विपर्यस्यैव[2] पात्रं होत्रैव द्विः संभक्षयत्यृतुना पीतस्येति । ॥ १६ ॥

अथ होतारं विपृच्छति प्रणवमुपांशुशंसं शंसिष्यसी३ विग्राह्या३मिति । स यथैनं होता प्रत्याह तच्छ्रुत्वा निगृह्य पात्रं पराङावर्तत । इडा देवहूरिति यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । यदुपांशु शंसति तदुपांशु प्रतिगृणाति । यदुच्चैः शंसति तदुच्चैः प्रतिगृणाति । संततं वा विग्राह्यं वा । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमैन्द्राग्नं ग्रहमनूद्यच्छन्ते नाराशंसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते जुहोति । तथैव

१ B here and infra संपातम् instead of संस्रावम् (once संस्रावयम्) ।

२ एव om JT.

द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्त्येतत्पात्रं नाराशꣳसा भक्षयन्त्यनुसवनभक्ष इन्द्राग्निभ्यां पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रꣳ संभक्षयतो नराशꣳसपीतेन[1] नाराशꣳसा नराशꣳसपीतस्य[2] सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाꣳश्च म इत्यात्मानं प्रत्यभिमृशन्ति । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो वैश्वदेवायाथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदेमं वैश्वदेवं ग्रहं गृह्णाम्यथोदश्चꣳ राजानं पूतभृतमभि संपवयताद्दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतादिति । स तथा करोति । स शुक्रपात्रेण वैश्वदेवं कलशाद्गृह्णात्योमासश्चर्षणीधृत इत्यनुद्रुत्योपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते वैश्वदेवाय । स्तोत्र एषोत्तमेति प्राक्स्तोतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योच्छ्रित एतं वैश्वदेवं ग्रहमनूच्छ्रन्ति नाराशꣳसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानु-

१ Thus PBH Bh. Keś., नारा॰ the other MSS.

२ Thus, नराशꣳसपीतस्य PB Bh. Keś. Mantramālā.

वषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायत्तयन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन[1] नाराशंसा-नराशंसपीतस्य[1] सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातरिमे चर्तुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृजेति । स तथा करोत्यथ प्राङायन्नाह ॥ १७ ॥

मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्समुन्नीयोत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं[2] यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्यथ ते योनिर्मित्रावरुणाभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुणा-

---

१ The various readings as supra, page 229,3 ; HJ om. the bhakṣaṇamantra.

२ Here and infra the MSS. have sometimes उक्थेभ्य and उक्थायुवं ।

वैषोऽन्नमेति प्राङ्मैत्रावरुणस्य कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं यजुमनूच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषड्वरुणम यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहुत्याथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे यजुरेव संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वाचैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो मित्रावरुणाभ्यां पीतस्येति । मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्भिक्ष म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातर्यज्ञौ ते प्रचरेति । तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्याग ॥ १८ ॥

ब्राह्मणाच्छंसिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । ब्राह्मणाच्छंसिनश्चमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्समुन्नीयोत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञो ऽर्धवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थाल्यौ प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ब्राह्मणाच्छंसिन

एवोतमेति प्राङ्ब्राह्मणाच्छंसिनः कालात्पराङावर्तते प्रतिप्रस्थातार्थ्येनमाह्वयते ब्राह्मणाच्छंसी । प्रत्याह्वयते प्रतिप्रस्थाता । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङ्ङित्योद्यच्छत एतं ग्रहमनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसानाजुहुत्याथ प्रदक्षिणमावृत्य ब्राह्मणाच्छंसिनश्चमसे ग्रहस्य संस्रावमवनयति कृतं त्वा कृते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वाचैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति । ब्राह्मणाच्छंसिनश्चमसमेवैते भक्षः समुपहूय भक्षयन्ति । यथाचमसं चमसांश्चिन्व स इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथ प्राङायन्त्याह ॥ १९ ॥

अच्छावाकस्य चमसमनून्नयथ्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरेतेन ग्रहेण रमैहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्र प्रतितिष्ठति वा तूष्णीं वा । तस्मिन्संमुखाग्रावाणः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्यामथैनमुद्गातृभ्यः प्राञ्चस्तस्मिंस्तच्चेष्टन्ति यत्ते विदुरथोदृव्याधवनीयमर्धं वसतीवरीणामवनयत्यर्धमेकधनानां । पुरोऽर्धं वसतीवरीः सादयति । पश्चादर्धमेकधनानच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांश्चर्वश एव राजानं

प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारावित्यत एवोर्ध्वेन । संप्रसृप्तान्विदित्वाध्वर्युः प्राकायणाद्धाभिषोतार एत[1] क्षयत[1] ग्रावस्तुतमेहि[2] यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तासु॰तथैव निग्राभ्यासु यजमानं वाचयति । तास्तथैव यजमानाय संप्रदाय ग्राव्णामादत्तेऽन्यमुपांशुसवनात्तं तथैव प्राञ्चं प्रश्रित्य विसृज्य राजानं ग्रावाणमभि मिमीत इन्द्राय त्वेन्द्राय त्वेति । पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानः सर्वश एव राजानं मिमीते । ऽद्भिरभ्युक्ष्य ग्रावस्तुत उष्णीषं प्रयच्छत्यद्भिरेवाभ्युक्ष्याध्वर्योरावसथं वासो हरन्ति[3] । तथा मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति । तथा संप्रयौति । तथा तिरश्चर्मण्फलके अभिमृशति । तथा हस्तीर्वापयति । मात्राꣳशून्मयते । घोषवन्त एवाभिषुण्वन्तीहाइ हहाइ हहेति[4] । तदेव यदिनयन्तीहाइ[5] हह हहाइ हह हहाइ हहेत्यथ संभरणीये निष्कीडयन्तीहाइ हहाइ हहेत्यथैनꣳ सुसंभृतꣳ संभरण्याꣳ संभृत्योद्येन उत्प्रयच्छति ।

---

१ Thus PB TH Mantramālā.

२ Thus PTFH Bh., Mantramālā, Padārthanirv.; ॰स्तुमरहि BJ Keś.

३ Thus BHTP Bh; हरति F.

४ Here and l. 13, 14 BP have the pluti sign also after the last हह ( thus: हहाइ हहि ).

५ Uncertain reading. BT तदेवयदिनयंती॰; H: तदेवयहिनियंती॰; F: तदेत्ययैवहिर्यंती॰; P: तदेवयदिनयंत हह; Bh. and Keś. give no help ( निष्काय नयन्ति, Bh.)

तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्तृतीयस्य तृतीये हवद्रुपयन्ति हवहूहूहदित्युन्नीयमानतो दशापवित्रेण परिवेष्योन्नेय उत्प्रयच्छति तमुन्नेताधवनीये[1] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य[2] चर्मणि निदधाति तस्मिंस्तथैव संसृष्टान्याप्यः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति तथोद्गाता[3] वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपहृत्य प्राञ्चं ग्रावसु द्रोणकलशमध्यूहति तस्मिंस्तथैवोदीचीनदशं दशापवित्रं वितत्य प्रसिञ्चन् शुक्रामन्थिनौ ग्रहौ गृह्णात्यथर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति ॥ १ ॥

मरुत्वन्तं वृषभं वावृधानमिन्द्र मरुत्व इह पाहि सोममिति द्वाभ्यामथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयति तथोक्थ्यं गृह्णात्युक्थ्येन राजानं परिदधाति तथोपर्यर्धे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्समनुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इति तथोन्नेतारमाहातिरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति तथातिरिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतो ऽसीन्द्राय त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयमिन्द्राय त्वेति पूतभृतं तथोन्नेतरित्याह प्राञ्चं राजानं पूतभृतमभि संपवयताद्ग्रावभिराधवनीयं कृत्वा न्युब्जता-

१ Some MSS : तमुन्नेता०।

२ उपानिहृत्य F, उपावहृत्य BHP, comp. p. 208. 12.

३ यथोद्गाता H.

दिति। स तथा करोति। तथाय उपसृज्य बर्हिषी चात्वालोपनिःसर्पति। तेषु तथैव समन्वारब्धेष्वाग्नीध्रे स्रुवाहुतिं जुहोति। विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्यामेत्येतयाध्वर्यू जुहुतो। यथावेदमितरे जुह्वत्यथ प्रदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति[1]। तथा[1] सदसि यथायतनमुपविशन्ति। तथोद्गाथे वा प्रस्तावे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा। तथोपाकरणं जपति वायुर्हिंकर्तेति। स एष पञ्चदशो माध्यंदिनः पवमानो भवति। तस्याष्टम्यां प्रस्तुतायां वाचयति सुपर्णो ऽसि त्रिवृच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ चतुर्होतारं व्याचष्ट। उद्गते सामनि संप्रेष्यत्याग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय द्रुघ्णाहरेति। यथासंप्रैषं तौ कुरुतस्तथाय[2] उपसृज्याहेहि यजमानेति। पूर्वया द्वारा हविर्धानं प्रपाद्य तथा सम्यञ्चꣳ राजानमुपतिष्ठते। तथावकाशैश्चरति। तथा प्रचरण्यां सवहत्नो गृह्णीते। तथैवाग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं[3] धिष्णियेष्वङ्गारान्विहरति। तथा पुरस्तात्प्रत्यञ्चासीनो विहतान्धिष्णियान्व्याघारयति। तथोत्तरस्य हविर्धानस्य युगे प्रचरणीꣳ

---

१ प्रसर्पन्त्यथ BJ.

२ Thus BT; कुरुतोथाय the other MSS.; J corrupt.

३ Thus BJHP; चानपूर्वं F; चानुपूर्वं T.

आहरति । तथा शांकायिनेन पथा पुनराहृत्य जुहोति संततां गार्हपत्यादाहवनीयात् ॥ २ ॥

अथान्तरेण हविर्धाने उपविश्य दधिघर्माय दधि आनयति तदानीतमवेक्षते ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति । अथैनदर्धाय स्रुवे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्तमिन्द्र ते ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतमित्यपोद्धृत्य अथैनं प्रत्यैनꣳ श्रीणाति वाक् च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताꣳ शृतोऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं हविरित्यथाह होतर्वदस्व यत्ते वाद्यमित्यथैनमादायोपोत्तिष्ठन्नाह आतꣳ हविरित्याक्रम्याश्राव्याह दधिघर्मस्य यजेति वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ स यावन्तः प्रवर्ग्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे ॥ आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह सत्येन तपसा सह । तस्य दोहमशीमहि तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत

उपहूतस्योपहूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छति । तथा सवनीयान्पुरोडाशानासादयति । तेषां तथैव समवद्यन्नाह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्ति । तथोपभृति स्विष्टकृते सर्वेषाᳫं सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यत्याक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोति । तथोदङ्ङत्याक्रम्य यथायतनᳫं स्रुचौ सादयित्वा तथैव पात्र्यामिडाᳫं समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पञ्चैव हुतेति वदन्तो । ऽथ प्राङायन्नाहोन्नीयमानेभ्यो ऽनुब्रूहि ॥ ३ ॥

होतृचमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो ऽपि त्वमुन्नयस्व प्रतिप्रस्थातस्तुभिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपक्रमस्वेति । यथासंप्रैषं ते कुर्वन्ति । समानं कर्माश्रावणादाश्रावण एव[1] स्थेत्यध्वर्युः[1] पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषण्माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते यजोभौ जुह्वतः स प्रथमः संकृतिर्विश्वकर्मेति ।

---

१ Uncertain reading and interpunction; एवचेत्यध्वा॰ BJ; एवेत्यध्वा॰ T Keś.; एव--त्यध्वा॰ F; एवैतिमध्वा॰ HP; Bhavasvāmin: एव चेति स्थित इत्यर्थः. A Prayoga एवमिति स्थित इत्यर्थः (Grantha).

वषट्कृतानुवषट्कृते द्विर्जुह्वतश्चैव । द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वति । तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मण इति । तथा[1] प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा । तथा प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति । तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति । अन्येते महर्त्विजां चमसाश्चैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धोत्रकसमाद्भ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृतानुवषट्कृते द्विर्जुहोति । ब्राह्मणाच्छꣳसिन्यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीध्रयजेति । षड्ढोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यञ्चो द्रुत्यायेण होतारमुपविशन्त्ययाड्ग्नीदिति । स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति । तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते । उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध्र आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि मा विशेति दीर्घभक्षमनुद्रुत्य रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्पिन्व्य स इत्यात्मानं प्रत्यभिमृशन्ते ।

---

१ तथैव H.

आप्याययन्ति यमक्षानाप्यायन्त्वनेतु न इति । वीह्मि-मारामसूया आप्यायिता दक्षिणस्य हविर्धानस्यापाकमयो-ऽध्वर्युतीयाय महतीयायैतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशमानां प्राश्नाति । यदग्ना ज्ञात्पत्नी पत्नीशाले ।

॥ ४ ॥ प्रथमः ॥

अथ दाक्षिणानि होष्यन्नापत्याज्यस्थालीं सस्रुवां स्रुचं वासश्चैतस्य वसनश्रान्तमायां दर्भायां हिरण्यशकलः प्रग्रथितो भवत्येतत्समादायाहेहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण वेदः परीत्य पूर्वया द्वारा शालां प्रपाद्य समन्वारब्धेष्वपि-ग्रतेषु संप्रस्कन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनश्रान्तं स्रुग्दण्ड[2] उपसंगृह्य[2] सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्युदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्यथाग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा वसनश्चैवान्तं स्रुग्दण्ड उपसंगृह्य नयवत्यर्चाग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ दिवं गच्छ सुवः पतेति हिरण्यं ज्वलोद्धरति । स्रुचमन्ते दक्षिणा दक्षिणापथेनान्तरेण

१ Thus all and P, except B, which has °स्थापाकं° ।

२ स्रुग्दंडमुप° BJ.

सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं चान्तरेण चात्वालोत्करावेवमुदीच्यः प्रतिपद्यन्ते । ताः प्रदक्षिणं हुत्वाभ्येति रूपेण वो रूपमभ्येमि वयसा वय इत्यथैना विभजति तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाक इत्यथ सदो ऽभ्येत्येता[1] अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीरिति ॥ ५ ॥

अथैव आत्रेयो ऽपेण सह आस्ते । तमभ्येति[2] ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यं सुधातुदक्षिणमित्यथैनमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमितीतरः प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह । तस्य पाणौ हिरण्यमादधाति चन्द्र[3]मऽहेति यद् वान्यदुपकल्पते[4] । ऽथाग्नीध्रं हुत्वा हिरण्यमुखमग्नीधे ददात्यथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रे ऽथ हविर्धानं हुत्वाध्वर्यवे ददाति य उ चैनमन्ये ऽभितो भवन्त्यथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्राह्मणाच्छंसिने ऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो । यथासमुदितं प्रसर्पकेभ्यो । ऽथाहैषि यजमानेत्याग्नीध्रं

---

१ Thus FHTP, Keś.; अभ्येति BJ.

२ Thus TPH; अभ्येति the other MSS.

३ चंद्र THF Mantramālā; चंद्रं BP and a Prayoga, चंद्रमेति Keś.

४ उपकल्पयते the MSS.

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नौ पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्येतानि कामालीमोषेन्द्रत्वग्निना[1] देवेन ये देवा यज्ञहन इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राञ्चमीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनꣳ सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्दाता देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतमिति ॥ ६ ॥

अथ प्राङायत्याहेन्द्राय मरुत्वते ऽनुब्रूहीति तच्छ्रुत्वा प्रतिप्रस्थाता ग्रहावादायोपनिष्क्रामत्युपनिष्क्रामत्येवाध्वर्युर्यथावादम् उत्तरतस्तिष्ठते प्रतिप्रस्थाथे ऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते प्रेष्येति वषट्कृते अथोभौ जुहुतो ऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयति तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाणेति तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुता पात्रेण मरुत्वाꣳ इन्द्र वृषभो रणायेत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मरुत्वत इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होतैतत्पात्रꣳ संभक्षयतीन्द्रेण मरुत्वता पीतस्येत्यथ निगृह्य पात्रं पराङावर्तत इन्द्रा देवैरिति यावदेतस्य यजुषः पर्याप्नोति तावत्प्रपत्य-

---

१ यतीमां चे° TJHP Keś. (twice) ; यतिमो° BJ Keś. (once).

श्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शृणोति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एवं सतीर्थं मरुत्वतीयं पात्रमनूद्यच्छन्नाराशंसानथाश्रावयत्याश्राव्याह श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्यतस्यामं नाराशंसा भक्षायन्देनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति । होता चैवाध्वर्युश्चैतस्यामङ्कं संभक्षयतो नराशंसपीतेन नाराशंसानराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमन्वैते चमसः समुपहूय भक्षयन्ति । यथाचमसं चमसाञ्जिन्व म इत्यात्मानं प्रत्यभिमृशन्त । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सादयन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[1] माहेन्द्राय । ॥ ७ ॥

अथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदिमं माहेन्द्रं ग्रहं गृह्णाम्यथोदस्त्रं राजानं पूतभृतमभि संप्लवयतादृशाभिर्द्रोणकलशं मृद्दा न्युब्जतादिति । स तथा करोति । स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद्गृह्णाति महाँ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय ।

---

१ B nguin °वाचयम° ।

प्रस्तुते स्तोत्रे संप्रैषमाहाभिषोतारो ऽभिषुणुताग्नीदाशिरं विनयोलूखलमुदाहर प्रतिप्रस्थातर्वाहणमेककपालं निर्वप सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । होत एषोऽभ्यनेति प्राक्स्तोतुः कालात्पराङावर्तते ऽध्वर्युरर्धेनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रस्थितमुक्थं प्रतिगीर्य प्राङेत्योपच्छन्न एतं माहेन्द्रं ग्रहमनूच्यन्ते नाराशंसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्यथैतत्पात्रं नाराशंसां भक्षायन्त्यनुसवनभक्षो महेन्द्रेण पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन नाराशंसानराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्संभक्ष्य मार्जयन्ते । ऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति[1] । तं तथैवोक्तमे ऽतिग्राह्य आदाच्छावाकस्य चमसमनूत्थायाध्वर्युरेतः सर्वत्र एव राजानमुन्नय मातिरौरिषः प्रतिप्रस्थातरपैतेन पदेषा रमैहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्याथोद्ग्राभ्याधवनीयं सर्वत्र एव वसतीवरीः पर्यस्यति । सर्वत्र [2]एवैकधनान्पुरो ऽग्नमेव वसतीवरीकलशं

---

1 चयावप० all exc. TP. 2 एव om BJ.

स्वाहा जुहोति । पश्चादच्छैकधिष्ण्यान्ताच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्सर्वेष्व एव राजानं समुन्नीयोत्तरवेद्यां सादयित्वाथाच्छावाक उक्थ्यस्थाल्या औपभृतं पात्रं । तस्मिन्नेतं सर्वेष्व एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवति । स¹ उ¹ वा¹ ऐन्द्र¹ एव भवत्यथोक्थं² वाचीत्याह माध्यंदिनं सवनं प्रतिगीर्य प्रशास्तः प्रस्तौतीति । सर्पतेत्याह प्रशास्ता । संतिष्ठते माध्यंदिनं सवनम् । ॥ ८ ॥ द्वितीयः ॥

प्रसर्पन्ति तृतीयसवनाय देवी द्वारावित्यत एवोर्ध्वेन । संप्रसृप्तानभिविदित्वाध्वर्युः प्राङायत्याग्नीध्रपरिश्रयणमाहर प्रतिप्रस्थातराग्निरमानय सूतात्सुत्रमादित्यग्रहाय दध्याहरेति यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य य एष उपांशुपात्रे ऽंशुः प्राप्तो भवति तं माध्यंदिनीये चमसेऽपिसृज्य यमेव कं च³ ग्रावाणमादायोन्नेतारमाहोपसृजेत्युपसृजत्युन्नेताधवनीयाद्दशनेनापरिमितमभिषुत्याथैनं सुसंभृतं संभरध्यां संभृत्योन्नेत उत्प्रयच्छति । तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत । एवं तृतीय । चमसैममन्तो दशापवित्रेण परिवेष्ट्योन्नेत उत्प्रयच्छति । तदुन्नेताधवनीये⁴ विषाय प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपानिवृत्त्य⁵ नीड उत्सादयति । परिश्रयन्ति पूर्वां द्वारमपरां चाचाहल

---

१ सउवैरेन्द्र B; सउवैन्द्र T; PHF om. वा; J corrupt

२ वचोक्थं JT. ३ कंचन BF. ४ तमुन्नेता॰ some MSS.

५ उपानिवृत्त्य here all, also P.

आदित्यस्थाल्या औपयजं पात्रं[1] तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य आदित्यस्थाल्यां भवति कदा च न स्तरीरसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति[1] बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा च न प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यपोद्धृत्य बर्हिषी अर्धवेलाᳪ राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति सुम्नमित्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यथैनᳪ सविमत उपांशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामीत्यथैनमुद्गृह्णात्येव विज्ञानमुपैति यदि ताजक् प्रस्कन्दत्यप्रवर्षुकः[1] पर्जन्यो भवति[1] यदि चिरमवर्षुको[1] न सादयतीति ब्राह्मणमथैनमुपांशुसवनं दशापवित्रेण परिवेष्ट्य तेनाधस्तात्पात्रमुद्गृह्णन्नूर्मिंकारमभिषिञ्चन् ॥ ९ ॥

आ समुद्रादान्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देह्यीशानो विसृजा दृतिमित्यथैनमुपांशुसवनं[2] दशापवित्रेण परिमृज्य प्राचमपिसृजति[1] विष्टम्भे पूर्वां द्वारमपरां चाथैन[3] यद् बर्हिस्तेनापिधायोपोत्तिष्ठन्नादित्येभ्यः[4]

---

१ Thus J only; ॰वत्यप्रवर्षुकः F; ॰देवर्षुकः HP, the other MSS. are still more corrupt.

२ ॰मथैनमु॰ all except H, which has ॰मथैतमु॰ ।

३ Thus PHJ Keś.; चथैनं the other MSS.

४ ॰चोपोत्तिष्ठ॰ TP; ॰चोपोत्थिष्ठ॰ J; ॰चोपतिष्ठ॰ B; ॰चोत्तिष्ठ॰ HF.

प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यो ऽनुहूतीत्यंशूनभ्याधायादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति। वषट्कृत ओषधीः प्रास्याग्नावादित्यं जुहोति यथादेव। न उन्नीयते। पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमाहरत्। एतस्मिन्काले प्रतिधर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदचनानानयत्याग्रयणमेवाध्वर्युराहरत्। आदित्यस्थाल्यौ प्रतिप्रस्थाता ओपयत्यांशुम् संगृह्णाति। तासां तिसृणां चतसृणां वा[1] धाराणां [2]तथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति। तं[3] तथैव त्रिरभिहिङ्कृत्य परिमृज्य साद्यत्यपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाग्निरमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति चतसृभिरनुच्छन्दसमपोद्धृत्य बर्हिषी पूतभृतो बिले द्रप्सानभिमन्त्रयते। द्वौ पवमानस्य ग्रहौ गृह्णाति। तयोर्जितरित्याह प्राश्य राजानं पूतभृतमभि संपवयताद्ग्राभिराधवनीयं मृद्वा न्युब्जतादिति। स तथा करोति। तथाप उपसृज्य बर्हिषी आदायोपनिःसर्पति। तेषु तथैव समन्वारब्धेष्वाधवनीये स्रुवाहुतिं जुहोति॥ १०॥

इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्येतयाध्वर्यू जुहुतो। यथावेदमितरे जुह्वति। तथा

---

१ च T.  २ तथा om. THF.  ३ om. T.

प्रदक्षिणमावृत्य सदोऽभि पवमानꣳ सर्पन्ति । तथा सदसि यथायतनमुपविशन्ति । तयोद्गाथे वा प्रस्तोथे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष सप्तदश आर्भवः पवमानो भवति । तस्य नवम्यां प्रस्तुतायां वाचयति सखासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यंश पत्नीहोतारं व्याचष्ट । उद्गुते माध्यि संप्रैषमाहाग्नीच्छालाकाग्निविहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति । यथासंप्रैषं तौ कुरुतस्तथाप उपस्पृश्यैहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा यमस्तꣳ राजानमुपतिष्ठते । नाभावकाशैश्चरति । तथा प्रचरण्यां नवकृत्वो गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्ण्यादनुपूर्वं[1] धिष्ण्येषु शालाकाग्निविहरति[2] । तथा पुरस्तात्प्रत्यङ्क्रामिणो विवृताञ्छलाकान्व्याघारयति[2] । तथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीꣳ सादयति । तथा शालाकाग्निनैव पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । ॥ ११ ॥

अथ पशुना चरति मनोताप्रभृतिनेडान्तेन । तथा सवनीयान्पुरोडाशान्याचति । तेषां तथैव समवद्यन्नाह तृतीयस्य

१ चानुपूर्वं T; चनुपवं PBJ; चनुपूर्वा F; चान,पूर्वं H.

२ शालाकान् PTJ; शलाकान् BHF; शकलान् and शलाकान् H.

सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति । पूर्वार्धाद्द्वदायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्ति । तथोपस्तृणाति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यथाक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा तथैव पात्र्यामिडाꣳ समवधाय प्रतीषः पुरोडाशान्प्रस्थितानीत्यनु हैके संयन्ति पशव इडेति वदन्तो ऽथ प्राङायच्छाद्धोतृमीयमानेभ्यो ऽनुब्रूहि होतृचमसमनूनयध्वं तीव्राꣳ आशीर्वतः कुरुध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांश्चमसानुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राꣳ[1] आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति श्येनाय पत्वने स्वाहेत्यनुवषट्कृते तृम्पन्ताꣳ होत्रा मध्वो घृतस्य स्वाहेति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुह्वति । तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतो ऽभ्युन्नीयोपावर्तध्वमिति । यन्त्येते सर्वर्त्विजां चमसानथैते होत-

१ विश्वेदे॰ BT. Mantramala, the other MSS, also P, have विश्वदे॰ ।

काणां चमसाध्वर्यवः सहस्रं सदांसीर्वन्तो ऽभ्युन्नीयोपावर्तन्ते। तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति। वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति। परिधये जनप्रथनायेति[1] ब्राह्मणाच्छंसिन। ऊर्जे होत्राणामिति पोतुः। पयसे होत्राणामिति नेष्टुः। प्रजापतये मनव इत्यच्छावाकस्य-र्तमृतपाः सुववाडित्यग्नीधस्य[2] चमसमेवानुवषट्करोति[3] हम्पन्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति। सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविशत्यथाहाग्नीदिति। स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति। तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ति। उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध आदधाति षड्वत्तं। प्राश्नन्ति। मार्जयन्ते। इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनद्रुत्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसानाप्यायस्व समेतु त इति। सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध[4]

---

१ BTP add स्वाहा also after ॰प्रथनाय।

२ Thus, ॰अग्नीधस्य॰ HPT; ॰अग्नीभस्य॰ or आ॰ BJ.

३ Thus TFPH Bh; चमसमैवानुवष॰ J; चमसैवानुवष॰ B Ke.

४ B again ॰मार्जयम॰।

उपांशुसवनो वैश्वदेवाय । चमसांश्चमसाध्वर्यवो ऽपूपांल्लाजान्पुरोडाश-शकलानुपास्यति । नव होत्रचमसे । तानेत एतानुमन्त्रयते ऽत्र पितरो यथाभागं मन्दध्वमिति तस्मिन्काले[1] आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यदशना स्यात्पत्नी पत्नीशाले ।

॥ १२ ॥ तृतीयः ॥

अथ प्राङायन्नाह देवाय सवित्रे ऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहं गृहीत्वोपास्त्र मा मौषद् इति । तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहं गृह्णाति वाममद्य सवितरित्यनुद्रुत्योपयामगृहीतो ऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामीति । न सादयतीति ब्राह्मणमसादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्येति । वषट्कृते जुहोत्यथ वै भवति सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णातीति । स[2] सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णात्युपयामगृहीतो[3] ऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रा समीक्ष्य पराङावर्तत इडा देवहूरिति । यावदेतस्य यजुषः पर्याप्नोति तानञ्जपत्यन्वेन-

१ After मन्दध्वमिति HF ins. ऊर्जा ।

२ स only in PH; F reads सत् ।

३ The words सोमे सोममभिगृह्णाति om. B (are they interpolated?); P also has them

माह्वयते होता। प्रत्याह्वयतेऽध्वर्युः। प्रगृह्णाति। प्रतिगृह्णात्यथ यत्र होतुरभिजानात्येकया च दशभिश्च स्वभूत इति तत्प्रतिप्रस्थाता द्विदेवत्यपात्राणि मार्जालीये मार्जयित्वा पात्रेष्वपिसृजत्यथ यत्र होतुरभिजानाति प्र[1] द्यावा यज्ञैः पृथिवी ऋतावृधेति तदन्यतो-मदं प्रतिगृह्णात्योथा मोद इव मदा मोद इवेत्या व्याहावादथ यत्र होतुरभिजानाति तद्राधोऽद्य सवितुर्वरेण्यमिति तदुभयतो-मदमेव[2] प्रतिगृह्णाति मदा[3] मोद इव मदा मोद इवेत्या व्याहावात्समिद्धमुक्थं प्रतिगीर्य प्राङ्ङेत्योपच्छत एतं वैश्वदेवं ग्रहमनूपच्छन्ते नाराशंसानथाग्नावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विर्नाराशंसानुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायन्त्यनुमतनभक्षो विश्वैर्देवैः पीतस्येति। होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दसः पितृपीतस्य

---

१ The reading of the words commencing with प्र is not wholly certain. B om. from प्र द्यावा to अभिजानाति (incl.; line 6); instead of आव्याहावाद् (thus JP, l. 6) F has आव्याहावात्।

२ उभयतो॰ FP; अन्यतोमद॰ BJ, but comp. Padārthanirv. page 378 (n°421) and Āp. śrs. XIII. 13. 8.

३ मदा ... इवेति om. TJ; B. मदामोदैवमोदामोदैवेत्या॰; most of the MSS. contract the word इव with the preceding vowel; so HPBJ, but comp. TS. III. 2, 9. 5.

मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते भक्षः समुपहूय भक्षयन्ति । यथाचमसं चमसान्धिन्व स इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ।

॥ १३ ॥

अथ होतारं विपृच्छति परियक्ष्यामि सौम्याँ३[1] न परियक्ष्यामी३[1] इति । स यथैनँ होता प्रत्याह तत्कृत्वासन्नँ सौम्यमागच्छत्यथ स्रुचि चतुर्गृहीतं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यजेति । वषट्कृते जुहोत्यथोपस्तीर्य द्विस्सौरस्यवद्यति[2] । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । न[3] प्रत्यनक्त्यत्याक्रम्याश्राव्याह सौम्यस्य[4] यजेति । वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोत्यथैनं वैष्णव्यर्चा भस्माकृत्याभिजुहोति विष्णो त्वं नो अन्तम इति । यद्यु वै होताग्रे वैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत । तस्मिन्नाज्यमानीयावेक्षते । पवित्रं वै सौम्य । आत्मानमेव पवयन्ते । य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेतेति । तस्मिन्भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति । मन एवात्मन्दधार न गतमना

१ Some of the MSS. om. the pluti sign. F puts it both times behind the verb. सौम्यान् PBF ; सौम्यान् HJ.

२ Instead of अवद्यति B has, अवद्यन्नाथ सौमाणामुद्धृत्य ।

३ om. HF.

४ सोमस्य BJ.

भवतीति ब्राह्मणमथैनमुद्राहभ्यां हरन्ति । तस्मिंस्तस्मिन्हन्ति यन्ते विदुरथ प्राञ्चयन्नाह प्रतिप्रस्थातरुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहाण गृहीत्वोपास्स्व मा मीषद इति । तत्कृत्वा प्रतिप्रस्थातोपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णात्युपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ इति । बर्हिषी अन्तर्धाय हुतेन श्रीणात्यहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार । यदन्तरिक्षं तदु मे पिताभूदहं सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानामित्यपोद्धृत्य बर्हिषी न सादयतीति ब्राह्मणमसादयित्वापनिष्क्रम्याश्राव्याहाग्नीत्पात्नीवतस्य यजेति । वषट्कृते जुहोति सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्युपांश्वनुवषट्कृते[1] हुत्वा हरति भक्षं । स यद्यग्निमाग्नीध्र उपहवमिच्छेत उपैवैनं ह्वयेत । तौ तेन संभक्षयतो[2] ऽथाहाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोपप्रवर्तयतादुरुणोपप्रवर्तयतात्सव्यं कृत्वोरुमुपप्रवर्तयताद्धोतुश्चमसमनून्नयध्वमुन्नेतः सर्वेष्वेव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातर्होतृचमसं ध्रुवायावकाशं कुरुतादेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति भूतमसि भूते मा धा मुखमसि मुखं भूयासमिति । होतृचम-

---

१ करोति instead of कृते T.

२ Thus HJF; ॰र्गाम TB.

तमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्तेष्व एव राजानꣳ संसृष्टीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप[1] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते यज्ञायज्ञियेनात्र सप्तहोतारं व्याचष्टे । प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीयागन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिता इति । स यदेवैनामुद्गातोपमीवति[2] तदेषा[3] पत्न्यूरुणा पत्नीजनीकमुपप्रवर्तयति । नग्नं कृत्वोरुमुपप्रवर्तयति ॥१४॥

होत एषोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युः श्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाꣳ उतायमिति तदभ्यस्तो-मोदं प्रतिगृणाति मोदा मोद इव मदा मोद इवेत्या[4] व्याहावादं यत्र होतुरभिजानाति तन्तुं तन्वन्रजसो भानुमन्विहीति तत्प्रतिप्रस्थाता ध्रुवं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यथैनं प्रच्यावयति

1 सुꣳ found in HT; omitted in rest of the MSS.

2 °मीयति HJEP Ba. (one MS.) Ke4. °मीवति BT Bh. (another MS.)

3 Thus HBTJP; तदेषा E; सदेषा K.

4 मोदामोद इवेत्या B. मोदादिवेत्या E. मोद इव मदा मोद इवेत्या J. मोदा मोद इव मोदा मोद इवेत्या ; मोदा मोदैव मदा मोदेवेत्या HP. Bh. and Ke4.: ववत्येदे मोदा मोद इवेति प्रणवे मदा मोद इवेति ।

विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्वित्यथैनमाहरति दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवानित्यथैनꣳ होतृचमसे ऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि। यथा नः सर्वमिज्जगदयक्ष्माꣳ सुमना असत्॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत्। यथा नः सर्वा इद्दिशो ऽस्माकं केवलीरसन्निति प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङ्क्त्योथ्थच्छत एतꣳ होतृचमसमस्मं नूयच्छन्ते चमसानथाश्रावयत्याश्रावयास्तु श्रौषडुक्थ्यशा यज सोमानामिति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो ऽग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमसमेवैते त्रयः समुपहूय भक्षयन्ति यथाचमसं चमसाञ्छिन्व म इत्यात्मानं प्रत्यभिमृशन्ते साप्यायन्ति चमसान्सर्वभक्षा मार्जयन्ते ऽथैताꣳश्चमसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वा सादयति तेषु नीꣳस्तौꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलꣳ संयोक्थं वासौन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य प्रशास्तः प्रसुहोति सर्पतेत्याह प्रशास्ता संतिष्ठते तृतीयसवनम्॥ १५॥

चतुर्थः॥

अथ संप्रेषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं निहत्य गुदाꣳ

समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति। वषट्कृते जुहोति प्रेष्य प्रेष्येत्यैकादशानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति। शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्योन्नेतारमाहोन्नेतर्यथस्ने प्रचरेति। तच्छुत्वोन्नेता द्रोणकलश आग्रयणात्तार्तीयं[1] ग्रहं गृह्णात्युपयामगृहीतो ऽसि हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामीति। बर्हिषौ प्रस्तधाय धानाभिः श्रीणाति हरी स्थ हर्योर्धाना इत्यपोद्धृत्य बर्हिषी अथैनमादायोपोत्तिष्ठन्नाहेन्द्राय हरिवते धानासोमानामनुब्रूहीति। शीर्षन्नधिनिधाय विक्रम्याश्राव्याहेन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति। वषट्कृते जुहोति सहसोमा इन्द्राय स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षं। स यावन्त ऋत्विजस्तेभ्य उन्नेता धाना व्यावपति। न उन्नेतर्युपहवमिष्ट्वैकाभक्षयन्ते। मनसा संबाधते ॥ १६ ॥

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथैना निर्णिज्योत्तरवेद्याꣳ संनिवपन्त्यापूर्या स्था मा पूरयत प्रजया च धनेन चेति। निवपन्नेव यजमानस्तिस्रो धानाः सचते ऽथ याचति स्फ्यमुदपात्रं बर्हिरित्येतत्समादायाहैहि यजमानेति।

१ आग्रयणात्तार्ड B.

जघनेन दक्षिणेन हविर्धाने[1] परीत्य दक्षिणेन मार्जालीयं धिष्णियमुं स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वाञ्जलिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथ तिस्रो धाना ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यथ[2] पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ् पर्यावृत्याथ पञ्चहोतारं व्याचष्टे ऽथाभिपर्यावृत्य तथैवाञ्जलिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यामथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि स्वाहा मनुष्यकृतस्यैनसो ऽवयजनमसि स्वाहा पितृकृतस्यैनसो ऽवयजनमसि स्वाहेत्यथाप्सु सोमान्पर्युपविश्यात्रप्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामीत्यथैना निर्मीयोपोत्यायादित्यमुपतिष्ठन्ते ॥ १७ ॥

अपाम सोमममृता अभूमादर्श ज्योतिरविदाम देवान्। किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति यद्यु वा अस्तमित आदित्यो भवत्याहवनीयमेवैतेन यजुषोपतिष्ठन्ते ऽथाग्नीध्रं हुत्वाग्नीध्रे दधिद्रप्सान्भक्षयन्ति दधिक्राव्णो अका-

---

१ हविर्धाने PHBT; हविर्धानं JF.

२ इति om. HFP.

प्रस्तोतारमाह प्रस्तोतः साम[1] गायेति । साम्ना प्रस्तोतान्ववैति । त्रिर्निधनमुपैति । पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणम् । अथाक्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्त्युरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चिदिति । विषुवति द्वितीयं निधनमुपयन्त्यपः परास्थाय वाचयति शतं ते राजन्भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मदित्युदक्रान्ते तृतीयं निधनमुपयन्त्यथापामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य पाश इत्यथाप्सु बर्हिः प्रास्यत्यग्नेरनीकमप आविवेश । अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्न इत्यथैनत्स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान्यजत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १९ ॥

वरुणायानुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । [2]प्रत्यङ्ङत्याक्रम्याश्राव्याह[3] वरुणं यजेति । वषट्कृते जुहोत्यथोपस्तीर्य सर्वश एव वारुणमवद्यदाहाग्नीवरुणाभ्याꣳ स्विष्टकृद्भ्यामनुब्रूहीति । द्विरभिघारयत्याश्राव्याहाग्नीवरुणौ

---

१ Thus HTP Bh. Keś ; सामानि BJ Mantramālā.

२ F ins. च ।

३ Instead of अत्याक्रम्य (thus TP) B has आक्रम्य ; F om. the words अत्याक्रम्य ... द्विरभिघारयति ।

स्विष्टकृतौ यजेति। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजत्यथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यथैनेनापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः। सूक्तवाके नमोवाके विधेम स्वाहेत्यथैतमवभृथꣳ संप्रकिरन्ति यत्किंचित्सोमलिप्तं भवत्यवभृथ निचंकुण निचेरुरसि निचंकुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति। तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्यावैतदृजीषं प्लावयन्ति[1] सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतादिति। विन्दूनुपैव स्पृशति। न भक्षयत्यथानपमज्जन्त्याव-न्योन्यस्य पृष्ठे धावयतो[2] विस्रस्य मेखले प्रतिवमनीये वाससी परिधायोन्नेतारमाहोन्नेतरुन्नो नयेति। निरुद्भिरुद्धतौभिरुद्रायन्त्युद्वयं तमसस्पर्युदु त्यं चित्रमित्यथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इत्यथाप्रतीक्षमायन्ति। वरुणस्यान्तर्हित्यै। प्रपर्णं समिधः कुर्वत एधो

१ ॰क्षंति HBF Ke.; ॰यति TP.

२ Thus HJFP Bh.; धावयित्वा BT Ke.

ऽग्ने धिषीमहीत्यन्याहवनीये[१] ऽभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेति । व्यवच्छिन्दन्ति परिश्रयणानि । विवर्तयन्ति[२] हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम् । ॥ २० ॥

यावदेवाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपत्येष एव वेद एतन्मेक्षणमेतद्बर्हिरथैतां चरुस्थालीꣳ सहामकाषामुत्खिद्य[३] निर्णिज्य तयोदयनीयꣳ श्रपयति । तस्मिꣳस्तथैव श्रप्यमाणे जघनेन गार्हपत्यमौपसदायां वेद्याꣳ स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । निर्वपणा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं अपत्यङ्ङन्त्युद्धतादाग्नीध्रस्त्रिर्हरति ।[४] समानं कर्म यथा प्रायणीयस्यै तावदेव नाना । पथ्यामनु स्वस्तिं प्रथमां यजति तामिहोपोत्तमां यजति । नो तु दिग्भ्यश्चवन्ते[५] । ऽथ पुरस्तात्स्विष्टकृतः स्रुवाहुतिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्न इत्युपस्तरणाभिघारणाभ्यामेवैतद्ध्रुवाज्यं विच्छिꣳषन्ति[६] । समि-

---

१ Some of the MSS. एता चाह०, cp. p. 126, l. 11, p. 140, l. 15.

२ Thus PJ Bh.; ववर्तयंति TF Keś; निवर्तयंति BH.

३ उत्क्षिप्य most of the MSS.

४ After हरति HFJ ins. यदाग्नीध्रस्त्रिर्हरति ।

५ Uncertain. नेतुदिग्भ्यवते B; नेतुदंभ्यचवते T; नेतुर्दिग्भ्यवंते F; नेनिच-दिग्भ्यश्चवते J; नेतुदिग्भ्यश्चवंते H; नोनिचदिग्भ्यश्चवते P.

६ Uncertain; विछिंषंति BF; संच्छिषंति J; भुवाज्यविचिष (?) T; विछिं-षंति H; विछिꣳषंति P; समापयन्ति the Comm.

